हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशी-संस्कृत-सीरिज़्पुस्तकमालायाः
१११
व्याकरणविभागे (१३) त्रयोदशं पुष्पम्।

॥ श्रीः ॥

अनुभूतिस्वरूपाचार्य्यप्रणीतं

# सारस्वत–व्याकरणम्।

श्रीचन्द्रकीर्त्तिसूरिप्रणीतया चन्द्रकीर्त्तिनाम्न्या सुबोधिकया व्याख्यया,

काशीस्थदेवनाथचतुष्पाठी-प्रधानाध्यापक-कवितार्किकोत्कल-यास्क-

श्रीनवकिशोरशास्त्रिणा निर्मितया प्रसादाख्यया टीकया,

मनोरमया विवृत्या, सटीकलिङ्गानुशासन-

प्रक्रियया च समुद्भासितम्।

( उत्तरार्द्धम् )

प्राप्तिस्थानम्—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी।

१९९३

# विज्ञप्तिः



सुन्दरस्तुन्दिलश्शान्तो बालसूर्य्यसमप्रभः ।
विघ्नेशो हरतामत्र प्रत्यूहं कर्म्मघातुकम् ॥

अथ धर्म्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थो विश्वेषां विश्वेशयानां प्रार्थनीय इतिश्रुतिस्मृति-दुन्दुभिः । तत्र धर्म्मं समीहमानः—

स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः ।
स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम् ॥

येयं मालतीमालेव सुमनसां तोषं बालानां कण्ठभूषामादधती संसारपरिसरसमुद्गके-ऽनायासज्ञानामोदकुञ्चिकां विमुञ्चति । चेत्थं प्रतिज्ञा ग्रन्थकर्त्तुर्धार्मिकस्य—

'बालधीवृद्धिसिद्धये । सारस्वतीमृजुं कुर्वे' ।

इति तत्र पूत्तित्रयात्मिकायां पूर्वार्द्धोत्तरार्द्धभागभाजि चान्द्रीं प्रभामिव प्रकृतिव्यञ्जिकां प्रत्ययप्रदां चन्द्रकीर्तिमरीरचत्तरां पूर्णां सूरिश्चन्द्रकीर्तिः। भट्टोऽपि वासुदेवस्तत्र प्रसादमिव प्रसादं निचिक्षेपेति पूर्वार्द्धोपद्घाते विस्तृतमस्माभिरभाषि । अभिष्टसिद्धिप्रदस्यापि भट्ट-विदुषो दुर्घटतया प्रापणे प्रसादस्य भाग्यतो यथोपलब्धं समूलं चन्द्रकीर्तिसनाथं १९९१ वसन्तोत्सवावसरे तद्धितान्तैकभागं तन्तु प्राकाशयन्मदनुयोगेन प्रकाशको धीरः श्री जयकृष्णदासः । अस्मिन् किल सव्वँत्सरे तेनानुदिनं प्रोत्साहितेन मयानुपलभ्य-मानस्योत्तरभागप्रसादस्य पूरणं सभाष्यचन्द्रिकातत्त्वदीपिकास्मरणमुखेनाकारि । भद्रसमाजेषु निवेद्यते च—

श्रीवासुदेवभट्टेन पूर्वार्द्धे या विनिर्मिता ।
टीकायाः पूरणं तस्या उत्तरार्द्धे प्रकाश्यते । इति ।

हेमाननीयविबुधाः कृतशास्त्रचर्चाः
यद्यत्र लेखनगता मम दोषसंघाः ।
जाता भवद्भिरनिशं परिमार्जनीया
दोषान्धरन्ति महतामपि ये तु दुष्टाः ॥

इति निवेदकः

**प्रसादपूरकः**

## सारस्वतप्रक्रियोत्तरार्द्धगतविषयाणा-
# मनुक्रमणिका ।


| विषयः | पृष्ठम् |
| --- | --- |
| १ भ्वादि परस्मै० | १ |
| २ ” आत्मने० | ६४ |
| ३ ,, उभये० | ७७ |
| ४ अदादि० परस्मै० | ८५ |
| ५ ” आत्मने० | १०१ |
| ६ ” उभये० | १०६ |
| ७ जुहोत्यादि० परस्मै० | ११२ |
| ८ ” आत्मने० | ११७ |
| ९ ” उभये० | ११९ |
| १० दिवादि० परस्मै० | १२४ |
| ११ ” आत्मने० | १३२ |
| १२ ” उभये० | १३५ |
| १३ स्वादि० उभये० | ” |
| १४ ” परस्मै० | १३९ |
| १५ ” आत्मने० | १४० |
| १६ रुधादि० उभये० | १४१ |
| १७ ” परस्मै० | १४४ |
| १८ ” आत्मने० | १४६ |
| १९ तनादि० उभये० | १४७ |
| ” आत्मने० | १५० |
| ” परस्मै० | १५० |
| २० तुदादि० उभये० | ” |
| २१ ” परस्मै० | १५४ |
| २२ तुदादि० आत्मने० | १५९ |
| २३ क्र्यादि० उभये० | १६१ |
| २४ ” परस्मै० | १६४ |
| २५ ” आत्मने० | १६७ |
| २६ चतुरादिगणः | १६८ |
| २७ ण्यन्तप्रक्रिया | १७३ |
| २८ स प्रक्रिया | १८६ |
| २९ यङन्तप्रक्रिया | १९६ |
| ३० यङ्लुक् प्रक्रिया | २०५ |
| ३१ नामधातुप्रक्रिया | २११ |
| ३२ आत्मनेपदप्रक्रिया | २१७ |
| ३३ भावकर्मप्रक्रिया | २२२ |
| ३४ लकारार्थप्रक्रिया | २३२ |
| ३५ कृ० प्र० १ | २३५ |
| कृ० प्र० ३५ नि० २ | २५८ |
| कृ० प्र० ३५ क० ३ | २६८ |
| कृ० प्र० ३५ शी० ४ | २७४ |
| कृ० प्र० ३५ उ० ५ | २८१ |
| कृ० प्र० ३५ भा० ६ | २८७ |
| कृ० प्र० ३५ कृ० ७ | २९४ |
| ० प्र० ३५ स्त्री० ८ | ३०१ |
| कृ० प्र० ३५ क्त्वा० ९ | ३०५ |
| ३६ लि० प्र० | ३१३ |



# सारस्वतप्रक्रिया

प्रसाद—चन्द्रकीर्तिसमाख्यया व्याख्यया मनोरमा-
ख्यविवृत्या च संवलिता ।

## ( उत्तरार्द्धम् )

### भ्वादिषु परस्मैपदिनः १ ।

**अथाख्यातप्रत्यया निरूप्यन्ते ॥ * ॥**

*** चन्द्रकीर्तिः ***

सरस्वतीं सदा भक्तवाञ्छितार्थविधायिनीम् ।
सद्वाग्विलाससन्दोहदोहां कामदुघामिव ॥ १ ॥
नत्वा नागपुरीयाह्वतपोगणविभूषणम् ।
श्रीराजरत्नसूरिं चाख्यातव्याख्या विधीयते ॥ २ ॥ युग्मम् ।

अथ ग्रन्थकार आख्यातप्रत्ययान्विवक्षुः प्रतिज्ञां करोति—अथाख्यातेत्यादि । अथेति संज्ञासन्धिविभक्तियुष्मदस्मद्स्त्रीप्रत्ययकारकसमासतद्धितलक्षणाधिकाराष्टककथनानन्तरमाख्यातं नाम व्याकरणस्य नवमोऽधिकारः । तस्य प्रत्यया निरूप्यन्ते । आख्यायन्ते कथ्यन्ते अर्थात् निष्पाद्यन्ते भ्वादीनां रूपाणि येन तदाख्यातम् । अथवा आख्यान्ति आचक्षते कर्तुर्व्यापारमित्याख्याताः ॥ प्रतीयन्ते ज्ञायन्ते अर्था येभ्यस्ते प्रत्ययाः आख्यातसंज्ञकाः प्रत्ययास्ते निरूप्यन्ते ॥ * ॥

*** प्रसादः ***

सुन्दरस्तुन्दिलः शान्तो बालसूर्य्यसमप्रभः ।
विघ्नेशो हरतामत्र प्रत्यूहं कर्म्मघातुकम् ॥ १ ॥
श्रीवासुदेवभट्टेन पूर्वार्द्धं या विनिर्मिता ।
टीकायाः पूरणं तस्या उत्तरार्द्धे प्रकाश्यते ॥ २ ॥

अथाख्यातप्रत्ययान्विवक्षुः प्रतिज्ञां करोति—अथेति । स्याद्यन्तशब्दाधिकारानन्तरमित्यर्थः । आख्यायन्तेऽस्मिन् धातुप्रत्ययार्था इत्याख्यातोऽधिकारविशेषः ॥*॥

**धातोः ॥ वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ॥ १ ॥**

( च० ) तत्र प्रथममधिकारसूत्रम्—'धातोः' ॥ धातुशब्दस्य पञ्चम्येकवचनान्तम् । वक्ष्यमाणा इति । वक्ष्यन्ते कथयिष्यन्ते ते वक्ष्यमाणाः अतः परं ये वक्ष्यन्ते प्रत्ययास्ते धातोरेवाग्रे ज्ञेयाः न नाम्नः । अत्र प्रत्ययशब्देन प्रायो विभक्तयो ज्ञेयाः । तदधिकारादवाद्योऽपि प्रत्यया धातोरेवाग्रे ज्ञेयाः । तांश्च यथाधिकारं ग्रन्थकृदेव वक्ष्यति ॥ १ ॥

( प्र० ) धातोरिति । अधिकारोऽयं नाम्नो य इत्यतः प्राक् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र धातोरित्यधिकृतं वेदितव्यम् । तत्फलं तु ऊरीकरोति शुक्लीभवति सहायीस्यादित्यादावूर्यादीनां च्व्यन्तस्य धातोः पूर्वं प्रयोगस्य नियतत्वेन विशिष्टात् प्रत्ययोत्पत्तिर्माभूदिति । अन्यथा अड्द्वित्वयोर्दोषः स्यादिति दिक् ॥ १ ॥

**भ्वादिः ॥ भू सत्तायामित्यादिगणो धातुसंज्ञो भवति ॥ स च त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ॥ २ ॥**

( च० ) अथ कोऽसौ धातुरित्याह—सूत्रम्—'भ्वादिः' ॥ भू आदिर्यस्यासौ भ्वादिः । स् 'स्रोर्वि०' ॥ भूधातुः सत्तायां विद्यमानार्थे वर्तते इत्येवमादिर्यः शब्दो वर्णसमुदायात्मको धातुपाठेऽभिहितः स धातुसंज्ञो भवति विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति । तत्क्रमश्च धातुपाठादवगन्तव्यः । इह ग्रन्थगौरवभयान्न लिख्यते । दधात्यर्थमिति धातुः ॥ स चेति । स च धातुस्त्रिविधः । तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्त्रिप्रकारः । आत्मनेपदमष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अन्त्यं नववचनात्मकं विद्यते यस्य स आत्मनेपदी 'एध वृद्धौ' इत्यादिः । तथा परस्मैपदं वक्ष्यमाणवचनेष्वाद्यं नववचनात्मकं विद्यते यस्य स परस्मैपदी 'भू सत्तायाम्' इत्यादिः । तथा उभे परस्मैपदात्मनेपदे विद्येते यस्मिन् स उभयपदी । पचतिकरोतीत्यादि । यद्यपि 'निविशादेः' इति सूत्रेण केषांचिद्धातूनां पदविपर्ययो भवति । तथाप्यत्र स्वभावेन पदत्रयेण त्रिविधत्वमुक्तम् ॥ २ ॥

( प्र० ) भ्वादिरिति । भवनं भूः क्रिया । आदीयतेऽर्थोऽनेनेत्यादिः शब्दः । आङ्पूर्वात् दाञः किः । तथा च भूशब्दः क्रियावाचकः आदिशब्दः प्रकारवाचक इत्यर्थः । एवं सति हिरुक् वर्जने इत्यव्ययेऽतिव्याप्तिः तस्यापि वर्जनरूपक्रियावाचित्वात् । अतो भ्वादिरित्यावर्त्तनीयम् । अत्रादिशब्दो व्यवस्थार्थः । तथा च भूशब्दमारभ्य ये पठितास्ते धातुसंज्ञाः स्युः । एवञ्च क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वमिति लक्षणम् । वादावव्ययेऽतिप्रसङ्गवारणाय सत्यन्तम् । तावन्मात्रोपादाने च हिरुगादावतिव्याप्तिः । अत्राहुः—क्रियावाचित्वलाभायावृत्तिर्न कर्त्तव्या । न च यादावतिव्याप्तिः; या इत्यस्य लाक्षणिकत्वेनैवाग्रहणात , यदस्त्यदाद्यत्वम् आपि वेति सिद्धेः, वेत्यव्ययस्य च धातुत्वेऽप्यनिष्टादर्शनात् । अथ धातुत्वे विकल्पादावपि गन्धनादाविव वातीति रूपमापद्येतेति

चेत्, श्रणु, तस्याव्ययत्वेन 'अव्ययाद्विभक्ति'रिति तिबादेर्लुकोऽनिवार्य्यत्वात् । एवं च सूत्रे विभक्तिग्रहणस्य सार्थक्यम् । न स्यादेरिति नोक्तम् । सर्वादेरुभशब्दस्य तु उभ उभे इत्यत्र पठितत्वेऽपि उभकावित्याद्यर्थतया सर्वादिपाठस्योक्तत्वेन धातुत्वबाधनात्; धातुत्वे हि स्याद्यनुत्पत्तेरुभकावित्यस्यासम्भवात् । अथ द्यो दिवावित्यत्र स्वर्गवाचकस्य धातुत्वं स्यादिति वाच्यम्; न; तत्रोदितः पाठेनानुदितस्तस्याग्रहणात् । सानुबन्धकग्रहणेनातदनुबन्धकस्येत्युक्तेरिति । का पुनः क्रिया भावनैवेति गृहाण । तथा हि अभवतो गमनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्त्तुः करोतिकर्म्मत्वम् । तथा च करोत्यर्थकर्त्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थात् प्रयोजकव्यापारो णिरुत्पद्यमानः करोत्यर्थमवलम्बते ॥ २ ॥

**आदनुदात्तङितः** ॥ अनुदात्तेतो ङितश्च धातोरादित्यात्मनेपदं भवति ॥ ३ ॥

( च० ) अथ प्रथममात्मनेपदं येभ्यो धातुभ्यो भवति तान् दर्शयति । सूत्रम्—'आदनुदात्त०' इति ॥ आत् प्रथमैकवचनान्तम् । 'हसेपः' अनुदात्तश्च ङ् च अनुदात्तङौ अनुदात्तङौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः पञ्चम्येकवचनान्तम् । द्विपदं सूत्रम् । अनुदात्तेदिति धातुपाठे योऽभिहितः धातुपाठे यो धातुरनुदात्तेत्संज्ञकः कल्पितः 'एध वृद्धौ' इत्यादिकः । तथा ङित् ङकारानुबन्धः 'शीङ् स्वप्ने' इत्यादिः ततोऽनुदात्तेतो ङितश्च धातोः आदितिशब्देन आत्मनेपदं भवतीत्यर्थः ॥ ३ ॥

( प्र० ) **आदनुदात्तङित इति** । अनुदात्तश्च ङ् च अनुदात्तङौ तावितौ यस्य धातोः सोऽनुदात्तङित् तस्मात् । द्वन्द्वान्ते श्रुयमाण इच्छब्दः प्रत्येकमभिसम्बध्यते । द्वन्द्वेऽल्पस्वरेति ङस्य पूर्वनिपातो न हसान्तत्वात् । 'ण्यायनणि'त्यादि ज्ञापकसिद्धं हि तत् । ज्ञापकसिद्धं न सर्वत्रेति 'देवतेदमर्थे' इत्यादिना च तस्यानित्यत्वाच्च । अनुदात्तेतो ङितश्च धातोरात्मनेपदं भवति । एधते । शेते । अन्यपदार्थत्वेन धातोराश्रयणं किम्; अगमत अशिश्रियत् । ङाङोर्ङित्त्वेऽपि धातुत्वाभावादान्न ॥ ३ ॥

**ञित्स्वरितेत उभे** ॥ ञितः स्वरितेतश्च धातोरात्मनेपदपरस्मैपदे भवतः ॥ आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्फलं परस्मैपदं प्रयोक्तव्यम् । अन्वर्थानुगतार्थसंज्ञाबलत्वात् ॥ ४ ॥

( च० ) अथोभयपदिनां लक्षणमाह—'ञित्स्वरितेत०' इत्यादि ॥ ञकार इत् यस्य स ञित् यश्च स्वरितेत्संज्ञको धातुपाठे उक्तः । ञिच्च स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः पञ्चम्येकवचनम् । उभे प्रथमाद्विवचनान्तम् । 'ईमौ' 'अ इ ए' द्विपदमिदं सूत्रम् । ञितो धातोः 'डुदाञ् दाने, डुकृञ् करणे, ब्रूञ्,' इत्यादितः प्रसिद्धात् तथा स्वरितेत इति यस्य धातुपाठे स्वरितेत इति संज्ञा कल्पिताऽस्ति तस्मात् 'डुपचष् पाके' इत्यादेर्धातुपाठोक्ताद्धातुगणादुभे इति आत्मनेपदपरस्मैपदे द्वे अपि भवतः ॥ अथ ग्रन्थकार एवोभयपदिनां धातूनां पदप्रयोजनशिक्षामाह-आत्मगामि चेदित्यादि । चेद्यदि उभयपदिनां

धातूनामुपायः फलं आत्मगामि भवति तदा आत्मनेपदं प्रयोज्यम् । यथा आत्मार्थं पचते । परार्थं पचति । यद्यपि 'सारस्वतीमृजुं कुर्वे' इत्यत्र पठनस्य परगामित्वात्परस्मैपदं युज्यते तथापि तत्पठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्यात्मनेपदं प्रयुक्तम् ॥ परगामीति । चेद्यदि क्रियाफलं परगामि भवति तदोभयपदिनां धातूनां परस्मैपदं भवति ॥ यथा 'प्रक्रियाकौमुदीं कुर्मः' इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात् युक्तम् । एवमन्यदपि यथासम्भवमूह्यम् । एतत्पदद्वयस्य प्रयोजनं कुत इत्याह—अन्वर्थादिति । आत्मने परस्मै इति द्वयोः शब्दयोः नामानुगतार्थत्वात् यादृशं नाम तादृश एवार्थः । यथा आत्मनिमित्तमात्मनेपदम् परनिमित्तं परस्मैपदमित्यन्वर्थः । तस्मात् इदं चात्मगामीत्यादिना पदप्रयोगकथनं नाम तादृश एवार्थः । यथा आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः । तस्मात् इदं चात्मगामीत्यादिपदप्रयोगकथनं । तूभयपदिनामेवावगन्तव्यम् । असार्वत्रिकश्चायं विधिः ॥ ४ ॥

( प्र० ) ञिदिति । अत्र केचित्—उभयपदिनां धातूनां कुत्र किं पदं प्रयोक्तव्यं तदाह;—आत्मगामि चेति । चेत् यदि क्रियाफलं क्रियाजन्यफलमात्मगामि कर्तृनिष्ठं भवति तदा आत्मने पदं प्रयोक्तव्यं विधेयम् । चेत् क्रियाफलं परगामि परनिष्ठं भवति तदा परस्मैपदं प्रयोक्तव्यम् । कुत इत्यत्राह—अन्वर्थेति । आत्मनेपदपरस्मैपदयोर्महासंज्ञयोरेवमन्वर्थसंज्ञाविज्ञानार्थत्वादिति भावः । यद्यपि सर्वासामपि क्रियाणां फलं कर्त्रर्थमेव भवति फलेच्छां विना कर्तुः प्रवृत्त्यभावात्, तथापि अव्यक्तं प्रधानगामीति न्यायेन फलशब्देनात्र प्रधानं फलं वाच्यम् । यदर्थः क्रियारम्भस्तदेव प्रधानं फलम् । यथा यागक्रियाया यजमानस्य स्वर्गप्राप्तिः पाकक्रियायाश्च भोक्तुस्तृप्तिस्तदर्थमेव क्रियारम्भात् । दक्षिणावेतनादिकन्तु न प्रधानं फलम् । देवदत्तः पचते इत्यत्र तृप्त्यर्थं पाकं कुरुते इत्यर्थः । सूपकारः पचतीत्यत्र परतृप्त्यर्थं पाकं करोतीत्यर्थः । तथा चोक्तम्—"स्वगामि चेत् फलं यत्र कामस्तत्र प्रयुज्यते परगामिफले चैषा कामना च तृतीयया । बहूनामेककर्तृणामेकश्चेत् स्वार्थमाचरेत्, परस्मैपदमेव स्यात्" इति । वस्तुतस्तु कर्तृगामिनि फले आत्मने पदं परगामिनि फले परस्मैपदमिति न संगच्छते उभेग्रहणस्य वैयर्थ्यापातात् । तथा हि—ञित्स्वरितेत एतावदेव सूत्रमस्तु आदिति चानुवर्तनीयम् । तेन कर्तृगामिनि फले आत्, अन्यत्र परतोऽन्यदिति परम् । किञ्च करोति कुरुते वा घटमित्यत्र घटनिर्म्माणफलस्य कुलालादन्यगामित्वस्यासम्भवात् सृष्टिं चकार चक्रे वा ईश्वर इत्यत्र जगन्निर्म्माणफलस्य ईश्वरेऽसम्भवाच्च । यजधातौ तु स्वर्गकामो यजेत होतर्यजेतेति श्रुतिभ्यां यजमानर्त्विजोरात्प्रयोगनियमः, अन्यत्र तु यथेष्टं प्रयोक्तव्यम् ॥ ४ ॥

**परतोऽन्यत् ॥ पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति ॥५॥**

( च० ) अथ परस्मैपदप्रयोगमाह—'परतो०' ॥ परतः पञ्चम्येकवचनान्तं तस्प्रत्ययान्तम् । अन्यद् प्रथमैकवचनान्तम् । अन्यशब्दस्य नपुंसकलिङ्गे पदप्रयोगः । द्विपदमिदं सूत्रम् । पूर्वोक्तेत्यादि । पूर्वोक्तानि यानि सूत्रद्वयोक्तानि निमित्तानि तत्रानुदात्तङित्त्वे

आत्मनेपदनिमित्ते ञित्स्वरितेत्त्वे उभयपदनिमित्ते एभिर्विधुराद्रहितात् अस्माद्धातोः उदात्तेत्संज्ञकाद्धातुपाठोक्तात् ङकारञकारानुबन्धरहिताच्च धातोः परस्मैपदं भवति। स च धातुपाठे ज्ञेयः ॥ ५ ॥

( प्र० ) परतोऽन्यदिति। अनुदात्तेतो ङितो निविशादेर्ञितः स्वरितेतश्च धातोरन्यस्माद्धातोः परतः केवलं परस्मैपदं भवति ॥ ५ ॥

**नव परस्मैपदानि ॥** तिबादीनामष्टादशसंख्यकानामाद्यानि नव वचनानि परस्मैपदसंज्ञानि भवन्ति ॥ पराण्यात्मनेपदानि ॥ ६ ॥

( च० ) अथ विभक्तिषु परस्मैपदयोर्वचनसंख्यामाह—सूत्रम्—'नव परस्मैपदानि' ॥ नव प्रथमाबहुवचनान्तम्। 'जश्शसोर्लुक्' 'परस्मैपदानि' प्रथमाबहुवचनम्। नपुंसकलिङ्गे। द्विपदमिदं सूत्रम्। तिबादीनामिति। वर्तमाना, विधिसंभावना, आशीः प्रेरणा, अनद्यतना, परोक्षार्था, अद्यतना, श्वस्तनार्था, भविष्यति, क्रियातिपत्तीभूतार्था, इति लक्षणानां दशविभक्तीनां यान्यष्टादश वचनानि तेषां मध्ये आद्यानि नव वचनानि परस्मैपदसंज्ञानि भवन्ति। तत्रापि केषुचित्पुस्तकेषु 'पराण्यात्' इति सूत्रं दृश्यते। तत्र पराणि प्रथमाबहुवचनम्। आत् प्रथमैकवचनम्। द्विपदम्। पराणि नव वचनानि आत्मनेपदसंज्ञानि भवन्तीति वृत्तिः सुगमा ॥ ६ ॥

**वर्तमाने–तिप् तस् अन्ति, सिप् थस् थ, मिप् वस् मस्। ते आते अन्ते, से आथे ध्वे, ए वहे महे ॥** प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्तमानस्तस्मिन्नभिधेये तिबादयः प्रत्यया भवन्ति ॥ अस्य तिबादेः पाणिनीयानां लडिति संज्ञा ॥ तत्रैकवचनादीनि व्याक्रियन्ते ॥ ७ ॥

( च० ) अथाख्यातविभक्तीनां मध्ये सर्ववैयाकरणसमयप्रतिपालनार्थं विभक्तिप्रयोगसूत्रमाह—'वर्तमाने०' ॥ सप्तम्येकवचनान्तम्। तिप्, तस्, अन्ति। सिप्, थस्, थ। मिप्, वस्, मस्। ते, आते, अन्ते। से, आथे, ध्वे। ए, वहे, महे। सर्वाण्येतानि प्रथमैकवचनान्तानि सांकेतिकानि। एवमेकोनविंशतिपदं सूत्रम्। अथ वृत्तिकारो वर्तमान इति पदं व्याचष्टे—प्रारब्धेति। कश्चित्कालः क्रियायाः प्रथमक्षणे एव लग्नः सः प्रारब्धः स यावदपरिसमाप्तः अपरिपूर्णस्तावद्वर्तमान इत्युच्यते। प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्तमानः तस्मिन्नुक्तलक्षणे वर्तमाने कालेऽभिधेये वाच्यमाने सति धातोस्तिबादयो महेपर्यन्ता अष्टादश प्रत्यया विभक्तिलक्षणा भवन्ति प्रयुज्यन्ते इत्यर्थः। तत्र तिबादयो मस्पर्यन्ताः परस्मैपदसंज्ञाः। ते आदयो महेपर्यन्ता आत्मनेपदसंज्ञाः। अथ ग्रन्थान्तरे एतेषामेवाष्टादशवचनानां संज्ञान्तरमाह—अस्येति। पणिनीयानामाचार्याणां पणिन्युक्तग्रन्थपाठिनां वा मते अस्य तिबादेरष्टादशसंख्यस्य प्रत्ययस्य लट् इति संज्ञा ज्ञेया। लट्, लिङ्, लोट्, लङ्, लिट्, लुट्, लेट्, लृट्, लुङ्, इति दश लकाराः। तत्र वर्तमाने लट् ॥ ७ ॥

( प्र० ) वर्त्तमानेति । तिवादयश्च वर्त्तमानक्रियाया द्योतका एव न तु वाचकास्तस्य धातुनैव लाभात् । वर्त्तमानत्वं तु प्रारब्धापरिसमाप्तत्वम् ; त्रिंशत्यादिवर्षपर्यन्तं वेदाध्ययनेऽपि अधीते इति प्रयोगदर्शनात् । भूतभविष्यदभिन्नत्वमिति लक्षणं तु न भविष्यद्वर्त्तमानभिन्नत्वं भूतत्वं वर्त्तमानभूतभिन्नत्वं भविष्यत्वमित्यपि स्यात्, तथा चान्योन्याश्रयो दोषः । पर्वतास्तिष्ठन्ति इत्यत्र तु स्वतो भूताद्यभावेऽपि कालत्रयवर्त्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदाद् भूतादिव्यवहारः । तथा हि नलादिकाले तस्थुः । कल्क्यादिकाले स्थास्यन्ति । इदानींतनराजकाले तिष्ठन्ति । आत्मास्ति इत्यत्रापि शरीराद्युपाध्यतीतत्वादिनाऽतीतत्वादिव्यवहारोऽस्तीति दिक् ॥ ७ ॥

**नाम्नि च युष्मदि चास्मदि च भागैः ॥** नामादिषूपपदेषु प्राप्तेषु सत्सु त्रिभिर्भागैरेते प्रत्यया भवन्ति ॥ ( ते च त्रयो भागा यथाक्रमं प्रथममध्यमोत्तमसंज्ञाका भवन्ति) ॥ नाम्नि प्रयुज्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषः ॥ युष्मदि मध्यमः ॥ तथैवास्मद्युत्तमः ॥ ८ ॥

( च० ) एतेषामेव प्रत्ययानां त्रित्रिवचनविभागभेदेन पुरुषसंज्ञामाह सूत्रम्— 'नाम्नि च युष्मदि चास्मदि च भागैः' ॥ नाम्नि सप्तम्येकवचनान्तम् । च प्रथमैकवचनान्तम् । युष्मदि सप्तम्येकवचनान्तम् । च प्रथमैकवचनान्तम् ॥ अस्मदि सप्तम्येकवचनान्तम् । च प्रथमैकवचनान्तम् । भागैः तृतीयाबहुवचनान्तम् । सप्तपदमिदं सूत्रम् । नामादिष्विति । देवः देवौ देवाः । अथवा सः तौ ते इति नाम । त्वं युवां यूयं इति युष्मत् । अहम् आवाम् वयम् इत्यस्मद् । ततः नाम, युष्मद्, अस्मत्, लक्षणेषु त्रिषु पदेषु उभयपदेषु समीपे प्रयुज्यमानेषु परस्मैपदानामात्मनेपदानां च त्रिभिर्भागैः छेदैः कृत्वा एते उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति । तिप् तस् अन्ति इति परस्मैपदानि । ते आते अन्ते इत्यात्मनेपदानि एकवचनद्विवचनबहुवचनभेदेषु प्रथमपुरुषसंज्ञां लभन्ते । सिप् थस् थ । से आथे ध्वे । इति परस्मैपदात्मनेपदयोर्मध्यमपुरुषसंज्ञा । मिप् वस् मस्, इति परस्मपदे ए वहे महे, इत्यात्मनेपदे इत्युत्तमपुरुषसंज्ञा ॥ अथ नामादिषु प्रथमादिषु पुरुषप्रयोगशिक्षामाह—नाम्नीति । नाम्नि सामान्यलक्षणप्रयुज्यमाने उच्यमाने चशब्दादप्रयुज्यमानेऽप्यनुच्यमानेपि प्रथमेति प्रथमपुरुषो ज्ञेयः । प्रयुज्यमाने यथा चम्पूकथायाम् । 'जयति गिरिसुतायाः कामसंतापवाहिन्युरसि रसनिषेकश्चान्दनश्चन्द्रमौलिः' इति । यदि वा—'तं सन्तः श्रोतुमर्हन्ति' । तथा अप्रयुज्यमाने यथा रत्नमालायाम्—'शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदाऽमरम्' इत्यत्र बुधा इत्यप्रयुज्यमानेऽपि नाम्नि आहुरिति प्रथमपुरुषप्रयोगः । तथा—युष्मदि प्रयुज्यमाने अप्रयुज्यमानेऽपि मध्यमः पुरुषः । यथा कुमारसंभवे—'त्वं पितॄणामपि पिता देवानामपि देवता । परतोऽपिपरश्चासि विधाता वेधसामपि' । अप्रयुज्यमाने यथा—'अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् । भूतदयां विस्तारय तारय संसारसागरतः' ॥ इत्यत्र युष्मद्यप्रयुज्यमानेऽप्यपनयेत्यादिर्मध्यमपुरुषप्रयोगः । अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमः पुरुषः । प्रयुज्य-

माने यथा—'तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे भग्रहैः कालमीशम्'। अप्रयुज्यमाने यथा—'मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्' इत्यादि ॥ ८ ॥

( प्र० ) नाम्नि चेत्यादि । अत्रादूभुवि कर्म्मणि' इत्यादेः कर्म्मणीति कर्त्तरीति चानुवर्त्तते । पाच्छब्दावनुवृत्तौ च सप्तम्या विपरिणम्येते । ननु भागैरित्युक्ते कथं त्रय एव भागा लभ्यन्ते न चत्वारः पञ्च वेति चेत्, सत्यम्, कपिञ्जलालम्भनन्यायेनेति गृहाण । भवान् पचतीत्यत्र तु युष्मद्भवदर्थयोरसमानार्थत्वान्न मध्यमः । तथा हि अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिङ्गवान् न च सम्बोधनैकविषयः ॥ ८ ॥

**कर्तरि पं च** ॥ पं परस्मैपदं कर्तरि भवति ॥ चकारादात्मनेपदमपि ॥ तत्र भू इत्येतस्मात्परस्मैपदिनोऽब्विकरणात्कर्तरि तिबादयो योज्यन्ते ॥ भू सत्तायाम् ॥ तत्रैकत्वविवक्षायां प्रथमपुरुषैकवचनं तिप् । भू तिप् इति स्थिते । पकारः पित्कार्यार्थः ॥ ९ ॥

( च० ) अथ परस्मैपदप्रयोगशिक्षामाह—'कर्तरि पं च' ॥ कर्तरि सप्तम्येकवचनान्तम् । पं प्रथमैकवचनान्तम् । च प्रथमैकवचनान्तम् । त्रिपदमिदं सूत्रम् । पम् इति परस्मैपदं तिप् तस् अन्ति इत्यादिनववचनलक्षणं कर्तरि कर्त्रुक्तावेव भवति । न केवलं परस्मैपदं किन्तु आत्मनेपदमपि भवति । उभयपदिनां तु उभे अपि परस्मैपदात्मनेपदलक्षणे भवतः । यथा 'जयन्ति सन्तः' इति परस्मैपदम् । 'तदनु च विजयन्ते' इत्यात्मनेपदम् । 'सारस्वतीमृजुं कुर्वे' इत्यत्र करोतेर्धातोरात्मनेपदम् । 'प्रक्रियाकौमुदीं कुर्मः' इति परस्मैपदम् । एवमन्यत्राप्यूह्यम् । कर्मोक्तौ तु आत्मनेपदमेव भवति ॥ अत्र प्रथमं यदुक्तं 'भ्वादिः' इति सूत्रेण भू इत्यादीनां धातुसंज्ञा प्रतिपादिता । तेन भूधातोर्दशानामपि लकाराणां प्रयोगं चिकीर्षुः प्रथमं वर्तमानार्थप्रयोगं दर्शयति—तत्रेति । तेषु परस्मैपद्यात्मनेपद्युभयपदिलक्षणेषु धातुषु । भू सत्तायाम् इत्यादिधातुरुदात्तेत्त्वात् परस्मैपदी वर्तते स चाब्विकरणे भवति । विक्रियन्ते अवस्थान्तरं भजन्ते धातवोऽनेनेति विकरणम् । यद्वा प्रत्ययार्थाभिधाने सहायो विकरणम् । यद्वा प्रकृतिप्रत्ययान्तःपाती गणविभागकारकः प्रत्ययो विकरणः । सच 'अप् कर्तरि' इत्याद्याख्यातोक्तः प्रत्ययस्तद्विकरणमुच्यते । अबेव विकरणं यस्यासौ अब्विकरणस्तस्मात्परस्मैपदिनोऽब्विकरणाच्च तिबादयः परस्मैपदार्था नव प्रत्यया योज्यन्ते । इह हि धातवो दशधा । तत्राब्विकरणा भ्वादयः । लुग्विकरणा अदादयः । लुग्विकरणा अपि द्विरुक्ता ह्वादयः । यविकरणा दिवादयः । नुविकरणाः स्वादयः । नम्विकरणा रुधादयः । उब्विकरणास्तनादयः । अविकरणास्तुदादयः नाविकरणाः क्र्यादयः । स्वार्थे ण्यन्ताश्चुरादयः ॥ तेषु भूधातुरब्विकरणस्तस्मात् तिबादयः प्रयुज्यन्ते ॥ भू सत्तायां । भू अयं धातुः सत्तायां विद्यमानार्थे भवनार्थे वर्तते । भूधातोः प्रथमपुरुषैकवचनम् तिप् । अत्र पकारः पित्कार्यार्थः । अपित्तादिर्ङित्' इत्यादि तदर्थोऽयं पकारः । भू इति स्थिते ॥ ९ ॥

**अप् कर्तरि ॥** धातोरप्प्रत्ययो भवति कर्तरि विहितेषु त्यादिषु चतुर्षु दिप्पर्यन्तेषु परतः ॥ पकारो विकरणभेदज्ञापनार्थो गुणार्थश्च ॥ प्रकृतिप्रत्ययान्तः पतति यः प्रत्ययः स विकरणः ॥ १० ॥

( च० ) सूत्रम्—'अप् कर्तरि' ॥ अप् प्रथमैकवचनान्तम् । कर्तरि सप्तम्येकवचनान्तम् । द्विपदं सूत्रम् । धातोरिति । भ्वादेर्धातोः प्रत्ययान्ताच्च धातोः कर्तरि अप्प्रत्ययो भवति । तिबादिषु दिबाद्यन्तेषु चतुर्षु विद्यमानार्थविधिसंभावनार्थाशीःप्रेरणार्थानद्यतनार्थलक्षणेषु चतुर्षु प्रत्ययगणेषु परेषु सत्सु अप्प्रत्ययो भवतीत्यर्थः । अप् इत्यत्र पकारो विकरणाद्भेदज्ञापनार्थः । यतोऽत्र अप्प्रत्ययेऽप्यकारोऽवशिष्यते । 'तुदादेरः' इत्यत्राप्यकारो विधीयते । इत्थम् अप्प्रत्ययस्य अप्रत्ययस्यान्तरं न लक्ष्यते । अतः प्रत्ययभेदज्ञापनार्थमयं पकारः पित्कार्यार्थः । 'भू अ ति इति स्थिते ॥ १० ॥

( प्र० ) **अप्कर्त्तरीति ।** अपः पित्त्वमपित्तादिर्ङिदिति ङित्त्वाभावार्थम् । अन्यथा भवत इत्यादौ ङित्त्वाद्गुणो न स्यात् ॥ १० ॥

**गुणः ॥** धातोरन्त्यभूतस्य नामिनो गुणो भवति ॥ अवादेशश्च भवति ॥ द्व्यर्थविवक्षायां तस् ॥ ११ ॥

( च० ) **'गुणः'** ॥ गुणः प्रथमैकवचनान्तम् । । 'स्त्रोर्वि०' ॥ धातोः धातुसंबन्धिनोऽन्त्यभूतस्य नामिनः इवर्णोवर्णऋवर्णानां च गुणः स्यात्संज्ञासंध्युक्तो भवति ॥ क्वचित् 'णिति परे' इति दृश्यते तदशुद्धम् । पितं विनापि बिभरांचक्रुरित्यादौ गुणस्य दृश्यमानत्वात् । 'भो अ ति' इति स्थिते । अवादेशश्चेति । 'ओ अव्' 'स्वरहीनं०' । भवति इति सिद्धम् ॥ द्व्यर्थविवक्षायां द्वयोर्वाच्यमानयोः सतोः प्रथमपुरुषद्विवचनं तस् । भू तस् । 'अप् कर्तरि' भू अ तस् इति स्थिते 'गुणः' इति ॥ ११ ॥

( प्र० ) **गुण इति ।** इह धातोः प्रेरणे इत्यतोऽनुवृत्तस्य धातोरित्यस्य षष्ठीनिर्दिष्टस्येत्यन्तरस्य नामिनो गुणो भवति तत्स्थानिनामेवारेदो नामिन इत्यनेन गुणसंज्ञाविधानादित्यभिप्रेत्याह—धातोरित्यादि ॥ ११ ॥

**अपित्तादिर्ङित् ॥** पकारेतं तादिकं च विहायान्यः प्रत्ययो ङित्संज्ञो भवति ॥ अन्य इति किम् । इडामायवर्जितो दशलकारान्तःपाती ङित् । आदिशब्दात्सीसिग्रहणम् ॥ १२ ॥

(च०) ननु अप्प्रत्ययं विनापि गुणः क्रियतां तदर्थं सूत्रमाह-"अपित्तादि०" ॥ प इत् यस्यासौ पित् । त आदिर्यस्यासौ तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः प्रथमैकवचनान्तम् । ङ इत् यस्यासौ ङित् प्रथमैकवचनान्तम् । द्विपदमिदं सूत्रम् । पकारानुबन्धं तिप् अप् उप् प्रत्ययादिकं तादिकं ता तारौ तारस् इत्यादिश्वस्तनार्थप्रत्ययं विहाय त्यक्त्वा योऽन्यः प्रत्ययः स ङकारानुबन्धं विनापि आख्याते

ङित्संज्ञो भवति । पकारेतं तादिकं चेति आदिशब्दात्सिस्यपोर्ग्रहणं । तेन भूतार्थे सिप्रत्यये परे अवर्तिष्ट अदर्शत् अदर्शतामित्यादौ भविष्यदाद्यर्थे स्यपि प्रत्यये परे 'भविष्यति' 'अभविष्यत्' इत्यादौ च गुणः ॥ १२ ॥

( प्र० ) अपित्तादिरिति । अत्र पर्य्युदासबलात् पित्तादिभिन्नः प्रत्यय एव गृह्यते न धातुः। यत्तु आदिशब्दादायोऽपि गृह्यते तेन गोपायतीत्यादिसिद्धिरिति तद्भसात् ॥१२॥

**क्ङित्यद्व्युसि॥** किति ङिति च परे धातोर्गुणो न भवति द्व्युसं वर्जयित्वा ॥ कृताद्विर्वचनादुसि परे तु गुणो भवति ॥ ततो ङित्त्वात्तसि गुणप्रतिषेधेऽप्यप्प्रत्ययनिमित्तो गुणो भवत्येव ॥ सोर्विसर्गः ॥ भवतः ॥ वह्वर्थविवक्षायां भव अन्ति इति स्थिते ॥ १३ ॥

( च० )अथ ङिप्रयोजनमाह-सूत्रम्-'क्ङित्यद्व्युसि' ॥ क् च ङ् च क्ङौ तौ इतौ यस्य स क्ङित् तस्मिन् क्ङिति सप्तम्येकवचनान्तम् । द्विरिति द्विरुक्तो धातुः द्वेः उस् द्व्युस् तस्मादन्योऽद्व्युस् तस्मिन् अद्व्युसि । सप्तम्येकवचनान्तम् । द्विपदं सूत्रम् । किति पिता व्यतिरिक्ते णबादौ यक्प्रत्ययादौ च, ङिति पित्तादिवर्जिते प्रत्यये यङ्प्रत्ययादौ च धातोर्नामिनो गुणो न भवति । तत्रापि विशेषमाह—द्व्युसमित्यादि । द्वेः द्विरुक्तस्य धातोः उस् द्व्युस् तं द्व्युसं वर्जयित्वा अन्यत्र गुणो न भवतीत्यर्थः । कृतद्विर्वचनात् इति अप्प्रत्यये लुकि कृते ह्वादेर्धातोर्द्विरुक्तात्कृतद्वित्वात्परस्य यो झ उसादेशो विहितः तस्मिन् परे सति ङित्त्वेऽपि गुणो भवतीत्यर्थः । ततोऽत्र प्रस्तुते भूधातोः ङित्त्वात्तसि परे गुणप्रतिषेधेऽपि अप् प्रत्यये पिन्निमित्तो गुणो भवत्येव । गुणे कृते । 'ओ अव्' 'स्वरहीनं' भवतः इति सिद्धम् ॥ वह्वर्थानां बहूनां वक्तुमिच्छा यत्र क्रियते तत्र बहुवचने भू अन्ति इति स्थिते । 'अप् कर्तरि' 'ओ अव्' 'स्वरहीनं०' भव अन्ति इति जातम् ॥ १३ ॥

( प्र० ) संज्ञाफलमाह—क्ङित्यद्व्युसीति । यत्तु नोक्तमनित्यमित्यनेन अजुहवुरित्यादौ न गुण इति कैश्चिदुक्तं; तन्न युक्तम्; "आदेः स्वरेऽपि नोपधाया गुण" इति सूत्रेणैवात्र गुणनिषेधे सिद्धे तदर्थं नोक्तमनित्यमित्याश्रयणस्य व्यर्थत्वात् ॥ १३ ॥

**अदे ॥** अकारस्य लोपो भवति अकारे एकारे च परे ॥ भवन्ति । भवसि भवथः भवथ ॥ १४ ॥

(च०) सूत्रम्—'अदे' ॥ अश्च ए च अदे तस्मिन् सप्तम्येकवचनान्तं सांकेतिकम् ॥ अकारस्येत्यादि । प्रत्ययस्थे अकारे एकारे च परे लोपो भवति । अनेन च मध्यस्थितस्य अप्प्रत्ययसंबन्धिनोऽकारस्य लोपः । 'स्वरहीनं' । भवन्ति । इति प्रथमपुरुषस्य वचनत्रयसाधना ॥ एवं भवसि भवथः भवथ । इति मध्यमपुरुषे वचनत्रयसाधना ॥ उत्तमपुरुषे वचनत्रयेऽपि अप्प्रत्यये नामिनो गुणे च कृते । 'ओ अव्' 'स्वरहीनं' भव मि भव वस् भव मस् इति स्थिते—॥ १४ ॥

( प्र० ) अदे इति । आख्यातप्रकरणे एवायं विधिस्तेन न स्यादावतिव्याप्तिः ॥१४॥

**व्मोरा** ॥ अकारस्य आत्वं भवति वकारे मकारे च परे । भवामि भवावः भवामः ॥ स राजा धार्मिको भवति । त्वं साधुर्भवसि । अहमात्मविद्भवामीत्यादि प्रयोक्तव्यम् ॥ १५ ॥

( च० ) सूत्रम्—'व्मोरा' ॥ व् च म् च व्मौ तयोर्व्मोः सप्तमीद्विवचनान्तम् । आ प्रथमैकवचनं सांकेतिकम् । प्रत्ययसंबन्धिनोऽकारस्य तिबादेर्वकारे मकारे च परे आत्वं भवति । अनेन अपोऽकारस्य आकारः । भवामि 'सो०' भवावः भवामः ॥ अथ ग्रन्थकारः उक्तिप्रयोगमाह-'स राजा धार्मिको भवति' अत्र राजेति कर्तृपदम् । भवतीति क्रियापदम् । धातोः कर्मनिरपेक्षत्वात् अकर्मकत्वम् । धार्मिक इति विशेषणपदम् । एवं तौ राजानौ धार्मिकौ भवतः । ते राजानो धार्मिका भवन्ति । त्वं साधुर्भवसि । युवां साधू भवथः । यूयं साधवो भवथ । अहमात्मविद्भवामि । आवामात्मविदौ भवावः । वयमात्मविदो भवामः । इत्याद्युक्तवाक्यं प्रयोक्तव्यम् ॥ १५ ॥

( प्र० ) व्मोरेति । अत्रापि स्यादावपि नातिप्रसङ्गः उक्तयुक्तेः । तेन धनवानित्यादौ नात्वम् । इत्यादि प्रयोक्तव्यमिति । इदमत्र बोध्यम्-युगपत्प्राप्तौ परः । स च त्वं च भवथः । अहं च त्वं च भवावः । अहं च त्वं च स च भवामः इति । उक्तं च—"एकदाचेत् क्रियाकालसम्बन्धप्रतिपादनं धातोर्नामादिषूक्तेषु यः परः स पुमान् भवेत्" । परत्वं चाभिधायकसूत्रापेक्षया न प्रयोगापेक्षया ग्राह्यम् । अस्मदर्थस्यैकत्वेऽपि समुदायाश्रिताः संख्या ग्राह्याः । तदुक्तम्—"द्वयोर्नाम्नोर्बहूनां वा यदि वाक्ये समुच्चयः नामत्रयाश्रिता संख्या कृत्तिबाद्योर्विशेषणम् । स च त्वं च अहं चाहेति विवक्षायां त्वेकशेषो भवति ॥ १५ ॥

**अव्यवधानाच्च पुरुषविशेषः** ॥ यस्य क्रियापदेन व्यवधानं नास्ति ततः पुरुषविशेषः । अत्र व्यवधानं सूत्रस्थं ग्राह्यं न तु वाक्यस्थम् । सूत्रक्रमेण पुरुषप्रयोगो भवति ॥ साधू स च त्वं च भवथः ॥ अहं त्वं स च पण्डिता भवामः ॥ १६ ॥

( च० ) अथ पुरुषभेदमाह—नामयुष्मदस्मदां द्वयोस्त्रयाणां वा युगपत्प्रयोगे कस्य पुरुषस्य क्रियापदं भवतीत्याह । सूत्रम्—'अव्यवधानाच्च०' ॥ अव्यवधानात्पुरुषविशेषः । अव्यवधानाच्च पुरुषक्रियाभिः सहाव्यवधानादन्तरराहित्यात् प्रथममध्यमोत्तमानां क्रमेण पुरुषविशेषः । चकारात्क्रियाभिर्व्यवधानादन्तरसाहित्यात् उत्तममध्यमप्रथमानां व्युत्क्रमेण पुरुषविशेषः मध्यमप्रथमयोर्मध्यमः उत्तममध्यमयोर्मध्यमः उत्तममध्यमप्रथमेषूत्तमः । एवं सर्वलकारेषु ज्ञेयम् । स च त्वं च भवथः । इति व्युत्क्रमेण पुरुषविशेषः । अहं स च भवावः । अहं च त्वं च स च भवामः ॥ इति व्युत्क्रमोऽप्येवमेव ज्ञेयः । अव्यवधानात् अन्तररहिताद् क्रियायाः सामीप्यात् पुरुषविशेषः प्रयोक्तव्यः । प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाणां विशेषः स्यात् । अयमर्थः ।

नामयुष्मदस्मदां पुरुषत्रयाणां मध्ये द्वयोस्त्रयाणां वा युगपत्प्रयोगे सति क्रियायाः समीपस्थं पदं तस्यैव पदस्य पुरुषो भवति । तस्यैव पुरुषस्य क्रियापदं प्रयोज्यम् । यथा साधुः स च त्वं च भवथः इति । अत्र स च त्वं चेत्यत्र युष्मदः क्रियासमीपवर्तित्वात् क्रियाया मध्यमपुरुषः । नामयुष्मदोः प्रयोगात् द्वित्वं च । स च त्वं च साधू भवतः । अत्र नाम्नः क्रियायाः समीपवर्तित्वात्प्रथमपुरुषद्विवचनस्य प्रयोगः । एवं स च त्वं च अहं च साधवो भवामः इत्याद्यपि ज्ञेयम् ॥ व्याकरणान्तरे तु 'युगपद्वचने परः' पुरुषाणामन्यच्च (नामयुष्मदस्मदां मध्ये) द्वययोगे त्रययोगे च पराश्रयमेव । वचनं तु क्रियायाः सामीप्येऽप्यादिमपुरुषवचनम् । इति वर्तमाने साधना ॥ १६ ॥

**भूङ् प्राप्तौ आत्मनेपदी । तस्मात्तेप्रभृतीनि नव वचनानि प्रयोज्यानि । अब्गुणावः । भवते ॥*॥**

( च० ) भूङ् प्राप्तौ ङित्त्वादात्मनेपदी तस्माद्धातोः तेप्रभृतीनि नव वचनानि प्रयोज्यानि । 'अप् कर्तरि' 'गुणः' 'ओ अव्' भवते । भू आते इति स्थिते । 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'स्वरहीनं' भव आते इति स्थिते ॥*॥

( प्र० ) भूङ्प्राप्ताविति । ननु भूङ्प्राप्ताविति आत्मनेपदिप्रकरणेऽनभिधाय कथं परस्मैपदिप्रकरणे उक्तः । उच्यते । सत्तार्थभिन्नप्राप्त्यर्थभूधातुरस्तीति झटिति ज्ञानार्थं सत्तार्थभूधातुकथनानन्तरं भूङ्प्राप्ताविति कथनम् । अथवा तिबादि नववचनकार्य्यमुक्त्वा तेप्रभृतिनववचनानां कार्य्यप्रदर्शनार्थं तत्कथनम् ॥ * ॥

**आदाथ ई ॥ अकारात्परस्य आत् आथ्संबन्धिन आकारस्य ईकारो भवति ॥ भवेते भवन्ते । भवसे भवेथे भवध्वे । अदे—भवे भवावहे भवामहे ॥ स श्रियं भवते ॥ १७ ॥**

( च० ) सूत्रम्—'आदाथ ई' ॥ आ सांके० । आत् च आथ् च अदाथ् तस्य आदाथः । इ । 'सो' । आदौ 'सव०' मध्ये 'आदवे लोपश्' । त्रिपदं सूत्रम् । अकारात्परस्य आते आथे आताम् आथाम् इति वर्तमाना आशीःप्रेरणाऽनद्यतनप्रथमपुरुषमध्यमपुरुषद्विवचनस्याकारस्य इकारादेशो भवति । अनेन आते इत्यस्याकारस्य इकारः 'अ इ ए' भवेते । भू अन्ते इति स्थिते 'अप् कर्तरि' गुणः 'ओ अव्' आदाथ ई' अनेन आकारस्य इकारः 'अ इ ए' भवेथे भवध्वे । भू ए इति स्थिते । 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'अदे' भवे । 'म्भोरा' भवावहे भवामहे । स पुरुषः श्रियं लक्ष्मीं भवते इत्युदाहरणम् ॥ १७ ॥

( प्र० ) आदाथ ई । आ किम् अन्त्यस्य माभूत् । तपरः किम् गाते । अन्तरङ्गत्वादयः सवर्णदीर्घे कृते पुनः सवर्णदीर्घः ॥ १७ ॥

**विधिसंभावनयोः—यात् यातां युस्, यास् यातं यात, याम् याव याम, ईत ईयाताम् ईरन्, ईथास् ईयाथाम् ईध्वम्, ईय ईवहि ईमहि ॥ विधिः कर्तव्या-**

र्थोपदेशः । संभावनं कल्पनमूहः । तत्र यादादयः प्रत्यया भवन्ति ॥ लिङिति चैषां संज्ञा पाणिनीयानाम् ॥ १८ ॥

( च० ) अथ द्वितीयं लकारमाह--'विधिसंभावनयोः' ॥ विधिश्च संभावनं च विधिसंभावने तयोः विधिसंभावनयोः । शेषाण्यष्टादशापि पदानि प्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । अथ विधिसंभावनयोरिति पदं व्याचष्टे--विधिरित्यादि । कर्तव्यः कर्तुं योग्योऽर्थः स कर्तव्यार्थस्तस्योपदेशः शिक्षा स कर्तव्यार्थोपदेशः ॥ अथवा अज्ञातस्य वस्तुनो ज्ञापनं विधिः । कर्तव्यार्थो यथा--'विप्रो वेदमधीयीत' अज्ञातज्ञापनं प्रातःकृत्यादि शिक्षारूपम् । सर्वोऽप्ययं विधिः ॥ तथा संभावनं कल्पनं विचारणमुच्यते । तस्य पर्यायान्तरमूह इति । वितर्क इत्यर्थः । ततो विधौ संभावने च यादादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां यादादीनामष्टादशानां पाणिनीयव्याकरणपाठकानां मते लिङ् इति संज्ञा ॥ भू इति स्थिते तत्र प्रथमैकवचने भू यात् । 'अप् कर्तरि' 'गुणः' 'ओ अव्' । भव यात् इति स्थिते ॥ १८ ॥

( प्र० ) विधीति । कर्त्तव्येऽर्थे उपदेशः आज्ञापनं भृत्यादेरित्यर्थः । एतेन निमन्त्रणाधीष्टानामप्यत्रान्तर्भावः सूचितः । तत्रापि प्रवर्त्तनमात्रस्य सद्भावात् । तत्र नियोगकरणं निमन्त्रणम् । इह भावान् भुञ्जीत । आमन्त्रणं कामचारकरणम् । इह भवानासीत अधीष्टः सत्कारपूर्वको व्यापारः अधीष्वभो माणवकः भवानुपनयेत । सम्भावनशब्दार्थमाह--कल्पनमिति । अस्यापि पर्य्याय ऊहः ॥ १८ ॥

**या ई** ॥ अकारात्परो या ई भवति ॥ अ इ ए । भवेत् भवेताम् ॥ १९ ॥

**युस इट्** ॥ अकारात्परस्य युस इडागमो भवति ॥ भवेयुः । भवेः भवेतम् भवेत ॥ २० ॥

( च० ) सूत्रम् । 'या ई' ॥ या प्रथमैकवचनान्तं सांकेतिकम् । ई प्रथमैकवचनान्तम् । अकारात्परो विधिसंबन्धिप्रत्ययस्य यो या इति वर्णः स ई इति भवति । इकारः 'अ इ ए' भवेत् भवेताम् । बहुवचने भव युस् इति स्थिते । 'युस इट्' युसः षष्ठ्येकवचनान्तम् । इट् प्रथमैकवचनान्तम् । द्विपदम् । अकारात्परस्य युस इत्येतस्य वचनस्य इडागमो भवति । टित्त्वादादौ । 'अ इ ए' भवेयुः । भवेः भवेतं भवेत । सर्वत्र 'या ई' इतीकारः । उत्तमपुरुषैकवचने भव याम् इति स्थिते ॥ १९-२० ॥

( प्र० ) या ई इति । अनुकार्यानुकरणयोरभेदविवक्षयाऽविभक्तिको निर्देशः । 'आदाथ इ' रित्यत इरित्यनुवर्त्तते । अन्त्यादेशः षष्ठ्यभावान्न ॥ १९ ॥

**यामियम्** । अकारात्परो यामियं भवति ॥ भवेयम् भवेव भवेम । शिष्यो गुरुशुश्रूषको भवेदिति विधिः । भवेदसौ वेदपारगो ब्राह्मणत्वादिति सम्भावनम् ॥ भवेत भवेयाताम् भवेरन् । भवेथाः भवेयाथाम् भवेध्वम् । भवेय भवेवहि भवेमहि । 'अहं हरिभक्तिं भवेय ॥' २१ ॥

( च० ) सूत्रम्—'यामियम्' ॥ याम् षष्ठ्येकवचनान्तम् । इयम् प्रथमैकवचनान्तम् । अकारात्परस्य यामिति वचनस्य इयम् भवति । गुरुत्वात्सर्वस्यादेशः । भवेतम् । द्वित्वबहुत्वयोः । 'या ई' इतीकारः । भवेव भवेम । इति सिद्धम् ॥ अथोदाहरणम् । शिष्यो गुरुशुश्रूषको भवेत् । विधिः । अत्र शिष्यस्य, गुरुशुश्रूषारूपः कर्तव्यार्थः, अस्योपदेशविधिः शिष्येण गुरुशुश्रूषा कर्तव्येत्युपदिश्यते । ततोऽत्र विधौ यादादयः । तथा असौ ब्रह्मणत्वाद्वेदपारगो भवेत् इति सम्भावने सम्भवे यदादयः प्रत्ययाः स्युः । ब्राह्मणत्वेन वेदपारगत्वं सम्भाव्यते इत्यर्थः । एवमन्यान्यप्युदाहरणानि ज्ञेयानि ॥ २१ ॥

( प्र० ) यामिति । भवेयमिति इयमादेशे एत्वं भवेव भवेमेति येतित्वे एत्वं शिष्य इति शुश्रूषत इति शुश्रूषकगुरोः शुश्रूषक इति विधिरिति शुश्रूषकत्वलक्षणस्य कर्त्तव्यस्यार्थस्य अत्रोपदेशादेवं तौ तादृशौ भवेतां ते तादृशा भवेयुः त्वं तादृग् भवेः युवां साधू भवेतं यूयं सन्तो भवेत । अहं साधुर्भवेयम् आवां तादृशौ भवेव वयं सन्तो भवेमेति प्रयोज्यम् । इति सम्भावनमिति ब्राह्मणत्वेन छन्दोऽवगतत्वस्य सम्भवात् ॥ २१ ॥

**आशीः प्रेरणयोः—स्तुप् ताम् अन्तु, हि तम् त, आनिप् आवप् आमप् । ताम् आताम्, अन्ताम्, स्व आथाम् ध्वम्, ऐप् आवहैप् आमहैप्** ॥ अप्राप्तप्रार्थनमाशीः परस्येष्टार्थाशंसनं वा प्रेरणं प्रवर्तनम् । तत्र तुबादयः प्रत्यया भवन्ति ॥ एषां संज्ञा लोट् ॥ २२ ॥

( च० ) सूत्रम्—'आशीः प्रेरणयोः' ॥ आशीश्च प्रेरणं च आशीः प्रेरणे तयोराशीः प्रेरणयोः । सप्तमीद्विवचनान्तम् । शेषाणि तुबादीन्यामहैप्पर्यन्तानि अष्टादश पदानि प्रथमैकवचनान्तानि सांकेतिकानि । एवमेकोनविंशतिपदं सूत्रम् । आशिषं प्रेरणं व्याचष्टे—अप्राप्तस्य वस्तुनः स्वयं प्रार्थनं मे इदं वस्तु भवतु इत्याशीः । परस्यान्यजनस्य वा इष्टाशंसनं वाञ्छितार्थकथनं वा आशीरुच्यते । तथा हे शिष्य इदं कार्यं कुरु इति यत्प्रवर्तनं तदेव प्रेरणम् । तत्र आशिषि प्रेरणे च तुबादय आमहैप्पर्यन्ता अष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां च तुबादीनां पाणिनीयानां मते लोट् इति संज्ञा कथ्यते । भू । तुबादयः । सर्वत्रापि । 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'स्वरहीनं०' पकारः पित्कार्यार्थः । भव तु । भू तुप् इति स्थिते ॥ २२ ॥

( प्र० ) आशीरर्थमाह—अप्राप्तेति । प्रार्थना इच्छा । परस्येति । इष्टस्य प्रियार्थस्य प्रतिपादनमाशंसनं वा । पक्षान्तरे प्रेरणमिति । तेन विधेः प्रैषातिसर्गप्राप्तकालानां च ग्रहणं भवति । प्रवर्त्तमानमात्रस्य तत्रापि सत्त्वात् । तत्र विधिः प्राग्वदुदाहार्य्यः । प्रैषादौ भवान् कटं करोतु प्रेषितोऽतिसृष्टः प्राप्तकालश्च करणे अतिसर्गः कामचारानुज्ञा । तत्रेति । आशीः प्रेरणार्थविशिष्टेषु कर्त्रादिष्वित्यर्थः ॥ २२ ॥

**तुह्योस्तातङ्ङाशिषि वा वक्तव्यः** ॥ भवतु—भवतात् भवताम् भवन्तु ॥ २३ ॥

( च० ) 'तुह्योस्तातङ्ङाशिषि वा वक्तव्यः०' ॥ तुश्च हिश्च तुही तयोः तुह्योः आशीः प्रेरणे तुप् हि इत्येतयोर्वचनयोराशिष्यर्थे वाच्यमाने तातङित्यादेशो वा भवति । ङकारो ङित्कार्यार्थः । गुणनिषेधार्थस्तनुतादित्यादौ । अत्र तु अप्प्रत्ययनिमित्तो गुणो भवत्येव । अकार उच्चारणार्थः । गुरुत्वात्सर्वस्य तात् इति । तेन प्रथमपुरुषैकवचने रूपद्वयम् । भवतु भवतात् । भवताम् । भव अन्तु इति स्थिते 'अदे' इत्यकारलोपः । 'स्वरहीनं०' भवन्तु । मध्यमपुरुषैकवचने भव हि इति स्थिते ॥ २३ ॥

( प्र० ) तुह्योरित्यादि । अत्र तातङो ङित्त्वं गुणप्रतिषेधसम्प्रसारणाद्यर्थतया सम्भवत्प्रयोजनमतो नान्त्यादेशं प्रयोजयति । अनन्यप्रयोजनमेव ङित्त्वमन्त्यादेशं प्रयोजयति ॥ २३ ॥

**अतः ॥ अकारात्परस्य हेर्लुग्भवति न तु तातङः ॥ तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं न त्वन्त्यादेशार्थम् । भव–भवतात् भवतम् भवत । भवानि भवाव भवाम । आयुष्मान् भवतु भवान् । अध्ययनायोद्यतो भव सौम्य ! ॥ भवताम् भवेताम् भवन्ताम् । भवस्व भवेथाम् भवध्वम् । भवै भवावहै भवामहै । हरिं भवस्व त्वम् ॥ २४ ॥**

( च० ) 'अतः' ॥ पञ्चम्येकवचनान्तम् । अकारादुत्तरस्य हि इति वचनस्य लुग्भवति । अनेन हेर्लुग्भवति । भव इति सिद्धम् । द्वितीयरूपे । 'तुह्योस्तात०' इति तातङ् आदेशः । भवतात् भवतं भवत । उत्तमपुरुषैकवचनत्रयेऽपि 'सवर्णे दीर्घः०' भवानि भवाव भवाम । अथोदाहरणम्—भवानायुष्मान् भवतु । इत्याशीः । एवं भवन्तावायुष्मन्तौ भवताम् । भवन्तः आयुष्मन्तो भवन्तु । अत्र यद्यपि भवच्छब्दो युष्मच्छब्दवाची तथापि सामान्येन नामरूपत्वात् प्रथमपुरुषप्रयोगः । हे सौम्य ! त्वमध्ययनाय पठनाय उद्यतः सावधानो भव । अत्र प्रेरणे मध्यमपुरुषैकवचनप्रयोगः । एवमन्यदप्युदाहरणं ज्ञेयम् ॥ २४ ॥

( प्र० ) अत इति । स्थानिवद्भावेन तातङो हित्वेऽपि लोपो न । 'ओर्वा हेः'रित्यतो वेत्यनुवृत्तस्य व्यवस्थितत्वेन स्वीकारात् । अतः किम् । युहि । तपरः किम् । याहि । हेः किम् । भवतः । ननु अत इति सूत्रे वाग्रहणं कर्त्तव्यम् । ओर्वा हे रिति सूत्रे इतस्तदनुवृत्तिकरणेनासंयोगपूर्वादिति लाभः, वैपरीत्यकल्पनायां विधानगौरवप्रसङ्ग इति चेन्न, ओर्वाहेरिति सूत्रे वापदोपादानेन कार्य्यद्वयप्राप्तिसत्त्वाद्ग्रहणमत्र तु कार्य्यैकत्वात्तदध्याहारः कर्त्तव्यः ॥ २४ ॥

**अनद्यतनेऽतीते–दिप् ताम् अन् , सिप् तम् त, अमिप् व म । तन् आताम् अन्त, थास् आथाम् ध्वम्, इ वहि महि ॥**

अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमयामद्वयं सोऽद्यतनस्ततोन्योऽनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले दिबादयः प्रत्यया भवन्ति ॥

एषां संज्ञा लङ् ॥ दिसिमि इत्येतेषामिकार उच्चारणार्थः । ततो नकार 'इण्तन्यकर्तरि' इति विशेषणार्थः । 'वावसने' इति दकारस्य तकारः ॥ २५ ॥

( च० ) 'अनद्यतनेऽतीते' ॥ अद्य भवोऽद्यतनस्तदन्योऽनद्यतनस्तस्मिन् अनद्यतने सप्तम्येकवचनान्तम् । अतीते सप्तम्येकवचनान्तम् । अग्रे दिबादीन्यष्टादशपदानि प्रथमैकवचनान्तानि सांकेतिकानि । एवं विंशतिपदं सूत्रम् । अथ वृत्तिकारोऽनद्यतनेऽतीते इति पदं व्याचष्टे–अतीताया इति । वर्तमानदिनात्प्राक् अतीताया गताया रात्रेः अन्त्ययामद्वयादर्वाक् वर्तमानदिनं संयोज्य यावत् आगामिन्या आसन्नवर्तिन्या रात्रेः प्रथमप्रहरद्वयं सोऽष्टप्रहरप्रमाणः कालोऽद्यतन इत्युच्यते । ततोऽनद्यतनः कालोऽन्यः । सच अनद्यतनो द्विधा । अतीतानागतभेदात् । तत्रातीतेऽनद्यतने काले वाच्यमाने सति दिबादयो महिपर्यन्ताः परस्मैपदात्मनेपदभेदेनाष्टादश प्रत्यया भवन्ति । एषां चाष्टादशानां पाणिनीयमते लङ् इति संज्ञा—'अनद्यतने लङ्' इति ॥ दिसिमीत्यादि । तत्र दिप् सिप् अमिप् इत्येषां पकारः पित्कार्यार्थः । इकार उच्चारणार्थः । तेन द् स् अम् इत्यवशिष्यते । आत्मनेपदे तन् इति वचनस्य नकारः 'इण् तन्यकर्तरि' इति सूत्रार्थः । भू । दिबादीनि नव परस्मैपदवचनानि । सर्वत्र 'अप्कर्तरि' 'गुणः' 'ओ अव्' प्रथमपुरुषैकवचने । 'वावसाने' दस्य तः ॥ २९ ॥

( प्र० ) अनद्यतने इति । अस्मिन्नहनीत्यद्य । सद्य आदित्वादिदमद्यप्रत्ययश्चाहनीत्यर्थे निपात्यते । तद्धितोक्तत्वात्प्रथमा । अद्यशब्दवाच्यः कियान् कालः इत्याह—अतीताया इत्यादि । अतीता गता या रात्रिश्चतुर्यामात्मिका तस्या यद्यामद्वयं ततोऽर्वाक् आगामिन्या रात्रेः प्रथमयामद्वयं यावद्भवति तावानष्टयामात्मकः कालोऽद्यशब्दवाच्यः । अरुणोदयादारभ्य अरुणोदयपर्य्यन्तः काल इति केचित् । सूर्योदयादारभ्य सूर्य्योदयपर्यन्तमित्यन्ये । लौकिकानां ह्योऽद्य एव इति तत्रैव व्यवहारदर्शनात् । अद्यभवोऽद्यतनः 'त्यतनाविति' तनः । अद्यतनश्च कालस्त्रिविधः अतीतवर्त्तमानानागतभेदात् । अतीते सिः । वर्त्तमाने तिवादिः । अनागते स्यप् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिः तस्मिन् ह्यस्तने काले दिवादिरर्थादपरोक्षे । नन्वेवं ह्यस्तन इत्येवास्तु अनागतकालशङ्कापि नेति चेत्सत्यम् , न ओक्तमनित्यमित्यद्यतनेऽपि परोक्षेऽपरोक्षे णादिविध्यर्थमिदम् । तेन 'बहुजगद पुरस्तात्तस्य, मत्ता किलाहं चकर च किल चाटु प्रौढयोषिद्वदस्य' इत्यादिप्रयोगाः सिद्धाः । बहुव्रीहिपक्षेऽद्यतनेऽद्यतनाभावादद्यतने दिवादिप्रसङ्गाशङ्का तु न । अद्यतने अव्यापकेऽद्यतनस्य व्याप्यस्य सत्त्वात् ॥ २९ ॥

**दिवादावट्** ॥ दिबादौ परे धातोरडागमो भवति ॥ अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम । ह्योऽभवत्त्वत्पुत्रः ॥ २६ ॥

( च० ) सूत्रम्—'दिबादावट्' ॥ दिप् आदिर्यस्यासौ दिबादिस्तस्मिन् दिबादौ सप्तम्येकवचनान्तम् । अट् प्रथमैकवचनान्तम् । मध्ये । 'ओ अव्' द्विपदमिदं सूत्रम् ।

दिवादौ प्रत्यये परे सति धातोः अट् इत्यागमो भवति । टित्वादादौ । अभवत् अभवताम् । बहुवचने—'अदे' इत्यकारलोपः । 'स्वर०' अभवन् । मध्यमपुरुषैकवचने—'स्रोर्वि०' अभवः अभवतम् अभवत । उत्तमपुरुषैकवचने—'अदे' इत्यकारलोपः 'स्वर०' अभवम् । द्वित्वबहुत्वयोः—'म्वोरा' अभवाव अभवाम । अथोदाहरणं कल्पे—अतीतदिने पूर्वेद्युः तव पुत्रोऽभवत् । एवं ह्यः तव पुत्रौ अभवताम् । तव पुत्रा अभवन् । ह्यस्त्वमभवः । ह्यो युवामभवतम् । ह्यो यूयमभवत । ह्योऽमभवम् । ह्य अवामभवाव । ह्यो वयमभवाम इत्याद्युदाहरणानि योज्यानि । एवं भवतिवत्कर्तरि विभक्तिचतुष्टये परस्मैपदिनां धातूनामुदाहरणानि योज्यानि ॥ ३६ ॥

अभवत अभवेताम् अभवन्त । अभवथाः अभवेथाम् अभवध्वम् । अभवे अभवावहि अभवामहि । स राज्यमभवत ॥

( च० ) अथात्मनेपदिनो भूधातोस्तनादयो नव प्रत्यया भवन्ति । भू तन् इति स्थिते 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'दिवादावट्' तनो नकारः इत् । अभवत । 'आदाथ ई' 'अइए' अभवेताम् अभवन्त । अभवथाः अभवेथाम् अभवध्वम् । 'अइए' अभवे अभवावहि । अभवामहि । स पुरुषो राज्यमभवत । इत्युदाहरणम् ॥

**अथ णबादि कर्तरि प्रणीयते—परोक्षे णप् अतुस् उस्, थप् अथुस् अ, णप् व म । ए आते इरे, से आथे ध्वे; ए वहे महे ॥**

धातोः परोक्षेऽतीते काले णबादयः प्रत्यया भवन्ति ॥ एषां संज्ञा लिट् ॥२७॥

( च० ) अथ णबादि विभक्तिषट्कं कर्तरि कर्त्तुक्तौ प्रणीयते प्रदर्श्यते इत्यर्थः ॥ सूत्रम्—'परोक्षे' ॥ अक्षेभ्यः परोऽगोचरः परोक्षस्तस्मिन् परोक्षे । 'क्वचिद्माद्यन्तस्य परत्वम्' इति परशब्दस्यादौ प्रयोगः अक्षशब्दस्य परत्वम् । परःशब्दोऽत्र सान्तो निपातो गृह्यते । परार्थवाचको न परशब्दः यथा 'अलुक् क्वचित्' ॥ प्रक्रियामते तु पारस्करादित्वात्सुडागमः । णबादीन्यष्टादशापि पदानि सांकेतिकप्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । परोक्षे इन्द्रियागोचरे अतीते गते काले णबादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां पाणिनीयमते लिट् इति संज्ञा ॥ २७ ॥

( प्र० ) परोक्षे इति । अक्ष्णः पर इति परोक्षः, टाडका इत्यनेनाकारप्रत्ययः समासान्तः । यस्यलोपः । अक्षादिन्द्रियात् पर इति क्वचिद्मान्तस्य परत्वमिति परत्वं सहादित्वात् परस्यौकारः । अनद्यतन इत्यनुवर्त्तते । अनद्यतनेऽतीते परोक्षे द्योत्ये वाच्ये वा धातोर्णादयः प्रत्ययाः स्युरित्यर्थः । अनद्यतने किम् । देशान्तरे घटोऽभूत् । अत्र घटभवनं परोक्षमतीतं न चिरन्तनम् । अतीते किम् । अयमन्नं भोक्ता । अत्र भुजेर्भविष्यदनद्यतनत्वेऽप्यतीतत्वाभावः । इह विशेषविहिततादिभिर्बाधो नाशङ्कनीयः । अपरोक्षे तादीनां सावकाशत्वात् परोक्षे णबादिभिरेव बाधसम्भवात् । परोक्षे किं रामोराज्यमकरोदिति हनुमद्वचनम् । अथ पचतीत्यत्र विक्लित्त्यनुकूलो व्यापारसन्तानोऽधिश्रयणाद्यधःश्रयणान्तः क्रियाशब्दवाच्यः पच्यर्थस्तस्य समुदायस्य युगपदुत्पत्त्ययगादिः किदिति ।

'अपित्तादिर्ङि' दित्यतोऽपिदित्यनुवृत्तम्। कित् किद्वत्। कार्य्यातिदेशोऽयम्। ईजतुः। जुहुवतुः ॥ २७ ॥

**णादिः कित्** ॥ अपित् णादिः किद्भवति ॥ २८ ॥ **द्विश्च** ॥ णबादिसंयोगे धातोर्द्विवचनम् ॥ २९ ॥ **सस्वरादिर्द्विरद्विः** ॥ सस्वराद्योऽवयवोऽद्विरुक्तो द्विर्भवति ॥ ३० ॥ भू भू णप् इति स्थिते। णकारो वृद्ध्यर्थः। पकारः पित्कार्यार्थः ॥

( च० ) सूत्रम्—'णादिः कित्' ॥ अपित् णादिः किद्भवति। कित्त्वाद्गुणाभावः। अथ भूधातोः परस्मैपदप्रक्रिया प्रदर्श्यते। भू णप् इति स्थिते, णो वृद्ध्यर्थः। पकारः पित्कार्यार्थः। भू अ इति स्थिते। सूत्रम् 'द्विश्च' ॥ द्वि द्विवारम् इति विग्रहे 'द्वित्रिचतुर्भ्यः सुः' इति सु द्विस् प्रथमैकवचनं सि 'अव्यया०' 'स्रोर्वि०'। च अव्ययं ॥ द्विपदं ॥ णबादिसंयोगे सति धातोर्द्विर्वचनं द्वित्वं भवति ॥ सूत्रम्—'सस्वरादिर्द्विरद्विः' ॥ स्वरेण सहितः सस्वरः स्वरसहित इत्यर्थः। सस्वरश्चासौ आदिश्च सस्वरादिः प्रथमैकवचनान्तम्। द्विः अव्ययम्। न द्विः अद्विः त्रिपदं सूत्रम्। सस्वर अद्विरुक्तः आद्यावयवो द्विर्भवति। भू भू अ इति स्थिते ॥ २८–२९–३० ॥

( प्र० ) द्विश्चेति। अत्र द्विर्वचनं द्विः प्रयोग एव न त्वादेशः। तेन तुतोसेत्यादौ कृतस्य सस्याभावात् षत्वं न अनन्तरस्येति न्यायादुक्तणादिरेव गृह्यते न तु विदोनवाना-मित्यादिविहितोऽपि, तेन वेदेत्यादौ द्वित्वं न ॥ ३० ॥

**आभ्वोर्णादौ** ॥ [ आ, अश्च भूश्च अभ्वौ तयोः ] पूर्वस्याकारस्य भूशब्दस्य च आकारो भवति णादौ सति ॥ ३१ ॥ **ह्रस्वः** ॥ पूर्वसंबन्धिनो दीर्घस्य ह्रस्वो भवति ॥ ३२ ॥

( च० ) सूत्रम्—'आभ्वोर्णादौ' ॥ अश्च भूश्च अभ्वौ तयोः अभ्वोः। ण आदिर्यस्यासौ णादिः तस्मिन् णादौ। आदौ 'सवर्णे दीर्घः सह' द्वितीये 'नामिनो रः' द्विपदं सूत्रम् ॥ णादौ परे द्वित्वे कृते सति पूर्वस्य द्विरुक्तरूपस्य अकारस्य तथा भूधातुसंबन्धिन उकारस्य च आकारादेशो भवति। यद्यप्यासेत्यादौ आकारकरणं विनैव सिद्धिस्तथापि व्यानशे आनञ्ज आनर्च्च इत्यादिसिद्ध्यर्थमकारत्वम्। इति पूर्वस्य भूइत्येतस्य भा। भा भू अ इति जाते ॥ सूत्रम्—'ह्रस्वः' ॥ एकपदम्। पूर्वसंबन्धिदीर्घस्य ह्रस्वो भवति। अनेन पूर्वस्य ह्रस्वः ॥ भ भू अ इति स्थिते ॥ ३१–३२ ॥

( प्र० ) आभ्वोर्णादाविति। यत्तु नो वेत्यतो वेत्यनुवृत्ते व्यवस्थया भावकर्म्मणोर्भुवो नात्वं तेन बुभूवे सुखमनुबुभूवे इति। तन्नावभूवे अनुवभूवे इति रूपस्यैव न्याय्यत्वात्। यद्यपि भूकारस्य दीर्घाकारकरणमनर्थकं तथाप्यानर्चेत्याद्यर्थम् ॥ ३२ ॥

**झपानां जबचपाः** ॥ पूर्वसंबन्धिनां झपानां जबाश्चपाश्च भवन्ति

॥ ३३ ॥ झढधघभानां जडदगबा भवन्ति । खफछठथानां चटतकपा भवन्ति इति पूर्वभकारस्य बकारः ॥ **भुवो वुक् ॥** भुवो वुगागमो भवति णादौ स्वरे परे ॥ बभूव बभूवतुः बभूवुः ॥ ३४ ॥

( च० ) सूत्रम्—'झपानां जबचपाः' ॥ झपानां जबाश्च चपाश्च जबचपाः । पूर्वसंबन्धिनां झपानां जबाः चपा भवन्ति । झढधघभानां जडदगबा भवन्ति खफछठथानां कपचटता भवन्ति ॥ इत्यनेन सूत्रेण भकारस्य बकारो जातः । पुनश्च ब भू अ इति जाते ॥ सूत्रम्—'भुवो वुक्' ॥ भूधातोर्णबादौ स्वरे परे बुगागमो भवति ॥ किस्वादन्ते । उकार उच्चारणार्थः । वुग्विधानसामर्थ्यादेव गुणवृद्धी न भवतः । 'स्वरहीनं०' । बभूव बभूवतुः बभूवुः । बभूथ इति स्थिते ॥ ३३-३४ ॥

**क्रादेर्णादेः ॥** डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् संवरणे । द्रु गतौ । श्रु श्रवणे । स्रु प्रस्रवणे । ष्टुञ् स्तुतौ क्रसृभृवृद्रुश्रुस्रुस्तु इत्येतस्मात्परस्य वसादेर्णादेर्गणस्येट् न भवत्यन्यस्माद्भवतीति नियमादनिटोऽपीडागमः । 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति न्यायादिटोऽपि णबाद्यन्तत्वेन थपि वुक् । बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम । बलिर्बलवान् बभूव ॥ ३५ ॥

( च० ) सूत्रम्—'क्रादेर्णादेः' ॥ कृआदिर्यस्यासौ क्रादिस्तस्मात्क्रादेः । णादेः । द्विपदं सूत्रम् । डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् वरणे । द्रु गतौ । श्रु श्रवणे । ष्टुञ् स्तुतौ । इत्येतेभ्यो धातुभ्यः परस्य वस् प्रत्याहारादेर्णादिगणस्य । वस् प्रत्याहारः आदौ यस्य स वस्प्रत्याहारादिस्तस्य वस्प्रत्याहारादेः । थप् व म से ध्वे वहे महे इति प्रत्ययस्येडागमो न भवति । यथा चकर्थ ससर्थ बभर्थ दुद्रोथ शुश्रोथ तुष्टोथ इत्यादौ इडागमो न भवति ॥ अन्यस्माद्धातोस्तु इडागमो भवति । यतो निषेधः प्राप्तिपूर्वको भवतीति । एभ्यो धातुभ्य इड्निषेधेऽन्यस्माद्धातोः इट् भवतीति नियमः । इति भूधातोः णबादिषु स्वरादिव्यतिरिक्तेषु थकारवकारमकारेषु इडागमो भवति । 'वुक्' 'स्वर०' बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम ॥ बलिर्बलिराजा बलवान् बभूव ॥ एवं रामलक्ष्मणौ बलवन्तौ बभूवतुः । पाण्डवा बलवन्तो बभूवुः । त्वं बलवान् बभूविथ इत्युदाहरणम् । इति लिट्लकारस्य परस्मैपदम् ॥ ३५ ॥

( प्र० ) नियमादिति । विध्यभावादिडभावे सिद्धे सत्यारम्भो नियमाय भवतीति नियमः ॥ ३५ ॥

**बभूवे बभूवाते बभूविरे । बभूविषे बभूवाथे ॥**

( च० ) अथात्मनेपदं लिख्यते । बभूवे बभूवाते बभूविरे । बभूविषे बभूवाथे । एतेषु रूपेषु पूर्वोक्तसूत्रेणैव सिद्धिः । बभूविध्वे इति जाते सति ॥

**नामिनोऽचतुर्णां धो ढः ॥** नाम्यन्ताद्धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोश्च धस्य ढो भवति ॥ ३६ ॥ अत्र सेटो हलाद्वेति वक्तव्यम् ॥ बभूविध्वे-बभूविढ्वे । बभूवे बभूविवहे बभूविमहे । रामो राज्यं बभूवे ॥

( च० ) सूत्रम्—'**नामिनोऽचतुर्णा०**' नाम अस्यास्तीति नामी तस्य नामिनः । अचतुर्णो धः ढः । नामी अन्ते यस्य सः नाम्यन्तः तस्मान्नाम्यन्तात् धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोः धस्य ढकारो भवति । अनेन सूत्रेण धकारस्य ढकारो जातः । अत्र अस्मिन्सूत्रे ( सेटो हलाद्वेति वक्तव्यम् ) अस्यार्थः—इटा सहवर्तमानः सेट् तस्मात् सेटः हलात् वा भवति इति विकल्पेन धस्य ढो भवति । अतो बभूविध्वे बभूविढ्वे इति रूपद्वयं जातम् । बभूवे बभूविवहे बभूविमहे । रामो राज्यं बभूवे । भूधातोर्लिट्लकारः समाप्तिमगमत् । एवं पञ्च लकारा उक्ताः ॥ ३६ ॥

**आशिषि—यात् यास्ताम् यासुस्, यास् यास्तम् यास्त, यासम् यास्व यास्म । सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम्, सीय सीवहि सीमहि ॥** धातोराशिषि यादादयो भवन्ति ॥ एषां संज्ञा लिङ् ॥ ३७ ॥

( च० ) अथ षष्ठो लकारः प्रारभ्यते । सूत्रम्—'**आशिषि०**' ॥ आशिषि सप्तम्येकवचनान्तम् । अग्रे यादादीन्यष्टादशपदानि प्रथमैकवचनान्तानि सांकेतिकानि । एकोनविंशतिपदं सूत्रम् । धातोः केवलायामाशिषि अप्राप्तप्रार्थनालक्षणायां परस्येष्टार्थशंसनलक्षणायां वाच्यमानायां यादादयोऽष्टादशप्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । पाणिनीयानां मते एषां संज्ञा लिङ् । भूधातोः परस्मैपदित्वात् नव यादादयः प्रत्यया भवन्ति ॥ ३७ ॥

( प्र० ) आशिषीति । स्वस्य परस्य चेष्टार्थस्याऽऽशंसनमाशीः । तस्यां वाच्यायां यादादयः । यद्वा प्रार्थनप्रक्रिया वृत्तेर्धातोर्यादादयः ॥ ३७ ॥

**आशीर्वादादेः पं किदिति वक्तव्यम् ॥** तेन गुणाभावः । भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म । सः श्रीमान् भूयात् ॥ ३८ ॥

( च० ) '**आशीर्वादादेः**' ॥ पं परस्मैपदं कित् भवति इति वक्तव्यम् । कित्त्वाद्गुणाभावः । भूयात् भूयासुः । भूयाः भूयास्तं भूयास्त । भूयासं भूयास्व भूयास्म । स पुरुषः श्रीमान् लक्ष्मीवान् भूयात् । इत्युदाहरणम् । एवं तौ श्रीमन्तौ भूयास्ताम् । ते श्रीमन्तो भूयासुः ॥ ३८ ॥

( प्र० ) सः श्रीमानिति । एकतदभिन्नाश्रया श्रीमदनुकूला भावनाशंसना आशंसाविषया भवनक्रिया वेति बोधः ॥ ३८ ॥

भू सीष्ट इति स्थिते ॥ **सिसतासीस्यपामिट्** ॥ धातोः परेषां सि स तासी स्यप् इत्येतेषामिडागमो भवति ॥ ३९ ॥ गुणावादेशौ । षत्वम् । भविषीष्ट भविषीयास्ताम् भविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । सीव्यवधानेऽपि ढत्वम् भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । हरिभर्क्ति भविषीष्ठाः ॥

( च० ) भूङ् प्राप्तौ इति धातोरात्मनेपदित्वात् सीष्टादयो नव प्रत्यया भवन्ति । भू सीष्ट इति स्थिते । गुणः । भोसीष्ट इति जाते ॥ सूत्रम्—'सिसतासि०' ॥ सिश्च सश्च ता च सीश्च स्यप् च सिसतासीस्यपः तेषां सिसतासीस्यपाम् । इट् । द्विपदं सूत्रम् । सि 'भूते सिः' । स इति इच्छार्थः सः । ता श्वस्तनार्थेऽष्टादशको गणः । सी सीष्ट सीयास्तामित्यादिः आशीरर्थात्मनेपदे नवको गणः । स्यप् भविष्यत् क्रियातिपत्त्योः । धातोः परेषां इत्येतेषां प्रत्ययानामिडागमो भवति । टित्त्वादादौ । अत्र प्रथमं सीष्टादिकस्याङित्त्वाद् गुणं विधाय तत इडागमः । अथवा इडागमे कृतेपि टित्वे सति ङित्त्वाभावात् गुणकरणे न दोषः । 'ओ अव्' किलात्' भविषीष्ट भविषीयास्ताम् भविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । सीव्यवधानेपि णत्वं भवेत । [ तत्र 'सेटो हलाद्वा' इति विकल्पेन भविषीध्वम् ] भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । त्वं हरिभर्क्ति भविषीष्ठा इत्युदाहरणम् । इत्यात्मनेपदिनौ रूपाणि ॥ समाप्तिमगमत्षष्ठो लकारः ॥ ३९ ॥

**श्वस्तने—ता तारौ तारस्, तासि तास्थस् तास्थ, तास्मि तास्वस् तास्मस् । ता तारौ तारस्, तासे तासाथे ताध्वे, ताहे तास्वहे तास्महे** ॥ श्वो आगतेऽह्नि भविष्यदर्थे तादयो भवन्ति ॥ एषां संज्ञा लुट् ॥ इड्गुणावः । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वस्ते हरिः प्रत्यक्षो भविता ॥ ४० ॥

( च० ) सूत्रम्—'श्वस्तने' ॥ श्वो भवः श्वस्तनस्तस्मिन् श्वस्तने । ता तारौ तारस् । इत्याद्यष्टादश पदानि सांकेतिकानि प्रथमैकवचनान्तानि । इत्येकोनविंशतिपदं सूत्रम् । धातोः श्व आगामिदिने भाविनि कालाऽर्थे तादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां पाणिनीयानां मते लुट् संज्ञा । प्रथमं परस्मैपदिनो धातो रूपाणि । भू ता इति स्थिते । गुणः । 'सिसतासीस्यपामिट्' इत्यनेन सूत्रेण इट् । 'ओ अव्' भवि-

( च० ) लूञ् छेदने । 'धातोः प्रेरणे' एकः लुनाति तमन्यः प्रेरयति । लावयति । लावयेत् । लावयतु । अलावयत् । लावयाञ्चकार । लाव्यात् । 'सिसता०' । लावयिता । लावयिष्यति । अलावयिष्यत् । लुङ्लकारे । अलीलवत् अलीलवताम् अलीलवन् ।

जु गतौ । अजीजवत् ॥

( च० ) जु गतौ । 'धातोः प्रेरणे' । जावयति । लिट्लकारे जावयाञ्चकार । जाव्यात् । [ लिट्लकारे साधनं सुगमम् ? । ] अजीजवत् अजीजवताम् अजीजवन् । इत्यादीनि रूपाणि भवन्ति । एषां धातूनां लुङ्लकारे द्वित्वनिमित्ते स्वरे स्वरादेशो न भवति । तस्मात्पूर्वं द्वित्वं भवति । पश्चाद्वृद्धिः ।

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनाम् ॥ अङ्-सयोः पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे ॥४॥** असिस्रवत्-असुस्रवत् ।

( च० ) स्रु स्रवे । एकः स्रवति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । अन्यत सुगमम् । स्रावयति । लिट्लकारे । आम् प्रत्ययः । स्रावयाञ्चकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'पूर्वस्य' । 'ञेः' अनेन ञेर्लोपो भवति । असुस्रव् अङ् दिप् इति जाते । 'अङि लघौ' ॥ सूत्रम्—'स्रवति०' । स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां धातूनां अङ्-सयोः परयोः पूर्वस्य इत्वं वा भवति अवर्णपरे धात्वक्षरे परे । अनेन पूर्वस्य इकारः । असिस्रवत् असिस्रवताम् असिस्रवन् । इत्वाभावपक्षे—असुस्रवत् असुस्रवताम् असुस्रवन् ॥ ४॥

अशिश्रवत् अशुश्रवत् ॥

( च० ) श्रु श्रवणे । शृण्वन्तं प्रेरयति । 'धातोः प्रेरणे' 'धातोर्नामिनः' । श्रावयति । श्रावयेत् श्रावयतु । अश्रावयत् । लिट् । 'कासादि०' अनेनाम् । श्रावयाञ्चकार । 'ञेः' श्राव्यात् । 'सिसता०' । श्रावयिता । श्रावयिष्यति । अश्रावयिष्यत् । लुङ् । 'ञेरङ् द्विश्च' । 'पूर्वस्य हसादिः' । 'धातोर्नामिनः' । 'ञेः' । 'अङि लघौ' 'स्रवतिशृणोति०' अनेन पूर्वस्येत्वम् । अशिश्रवत् अशिश्रवताम् अशिश्रवन् । इत्वाभावपक्षे साधनं पूर्वसदृशम् । अशुश्रवत् अशुश्रवताम् अशुश्रवन् ।

अदिद्रवत्-अदुद्रवत् ।

( च० ) द्रु गतौ । 'धातोः प्रेरणे' । द्रावयति । चतुर्णां सुगमानि । लिट् । द्रावयांचकार । लुङ्लकारे । 'स्रवति०' । अनेन पूर्वस्य वा इत्वम् । अदिद्रवत् अदिद्रवताम् अदिद्रवन् । इत्वाभावपक्षे अदुद्रवत् अदुद्रवताम् अदुद्रवन् ।

**हनो घत् ॥** हन्तेर्घदादेशो भवति ञ्णिति णप्वर्जिते परतः ॥५॥ घातयति । अजीघतत् ।

( च० ) हन् हिंसागत्योः । घ्नन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' हन् ञि इति जाते । 'हनो घत्' हनः घत् । द्विपदम् । हन्तेर्धातोर्घदादेशो भवति णप्वर्जिते ञ्णिति प्रत्यये परतः । अनेन घदादेशः । 'अत उपधायाः' । 'स धातुः' । घातयति । घातयेत् । घातयतु । अघातयत् । लिट् । 'कासादि०' । घातयांचकार । 'ञेः' । घात्यात् ।

'सिसता०' । घातयिता । घातयिष्यति । अघातयिष्यत् । लुङ्लकारे । घात् ञि दिप् इति स्थिते । 'ञेरङ् द्विश्च' । 'कुहोश्चुः' 'झपानाम्०' । 'अङि लघौ' । 'लघोर्दीर्घः' । 'दिबादावट्' । अजीघतत् अजीघतताम् अजीघतन् । इत्यादीनि ॥ ५ ॥

( प्र० ) हनो घदिति । अत्र नामञिभिन्नञित्परकं ञिपदम् । नामञौ तु ब्रह्म घयतीति दर्शनात् । एवमपि णित्पदमुपदिष्टणित्परम् । आदिष्टणित्प्रत्यये घानिषीष्टेत्यादिदर्शनात् ॥ इह च हनो घदादेश इत्यादिव्याख्यानं प्राचामनुरोधेन । वस्तुतस्तु—हश्च न् चानयोः समाहारो हन् तस्य । घश्च त् चानयोः समाहारो घत । हनो घ्न इत्यतो हन इत्यनुवृत्तेः हन्तेर्हस्य घो ञ्णिति तस्य न च तो भवति ञ्णिति । नचेति निषेधादिण् वर्जम् । एतेन हनो घ्न इत्यतो हनोऽनुवृत्तेर्घत्वसिद्धेश्चोभयं व्यर्थमित्युक्तिरपि परास्ता ॥५॥

**शदॢ शातने ॥ शदेः शात् ॥ शदेः शतादेशो भवति अगतौ ञौ परे ॥ ६ ॥ शातयति । गतौ तु शादयति । अशीशदत् ॥**

( च० ) शदॢ शातने । शदन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' ॥ 'शदेः शत्' । शदेर्धातोः शतादेशो भवति अगतौ ञौ परे । 'अत उपधायाः' । शातयति । लिट् । शातयांचकार । लुङि साधनं तु पूर्ववत् । अशीशतत् अशीशतताम् अशीशतन् । गतौ तु । शादयति । अशीशदत् ॥ ६ ॥

**रातो ञौ पुक् च । डुदाञ् दाने । दापयति । अदीदपत् ॥**

( च० ) डुदाञ् दाने । ददतं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' । 'रातो ञौ पुक् च' अनेन पुगागमः । दापयति । लिट् । दापयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । ह्रस्वः । 'अङि लघौ' । 'लघोर्दीर्घः' । अदीदपत ।

**धापयति अदीधपत् ॥**

( च० ) डुधाञ् धारणपोषणयोः । दधतं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' । 'रातो ञौ पुक् च' । धापयति । धापयांचकार लुङ् । 'झपानाम्—' अनेन दस्य धः । अन्यत्पूर्ववत् । अदीधपत् अदीधपताम् अदीधपन् ।

**पुगन्तस्य गुणो वक्तव्यः ॥७॥ अर्पयति । स्वरादेः परः । आर्पिपत् ।**

( च० ) ऋ गतौ । ऋच्छन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' 'ञौ पुक् च' ऋप् ञि इति जाते सूत्रम् । 'पुगन्तस्य०' पुगन्तस्य धातोर्गुणो वक्तव्यः । अनेन गुणः । अर्पयति । लिट् अर्पयांचकर । 'ञेः' । अर्प्यात् । 'सिसता०' । अर्पयिता । लुङ्लकारे । अर्पि दिप् इति स्थिते । 'ञेरङ् द्विश्च' । 'स्वरादेः परः' । 'नद्राः' अनेन रकारस्य द्वित्वं न भवति । 'ञेः' 'दिबादावट्' 'स्वरादेः' 'सवर्णे०' आर्पिपत् आर्पिपताम् आर्पिपन् ॥ ७ ॥

**ष्ठा गतिनिवृत्तौ । स्थापयति । तिष्ठतेरुपधाया इकारो वक्तव्योऽङिपरे ॥८॥ ततो द्वित्वम् । अतिष्ठिपत ॥**

( च ) ष्ठा गतिनिवृत्तौ । 'आदेः ष्णः स्नः' । 'धातोः प्रेरणे' तिष्ठन्तं प्रेरयति इति

विग्रहे ञिः प्रत्ययः । 'रातो ञौ पुक् च' । स्थापयति । स्थापयांचकार । 'ञेः' । स्थाप्यात् । 'सिसता०' । स्थापयिता । स्थापयिष्यति । अस्थापयिष्यत् । लुङ्लकारे । स्थाप् ञि दिप् इति स्थिते । 'ञेरङ् द्विश्च' । 'ञेः' ॥ सूत्रम्—'तिष्ठतेः' तिष्ठतेर्धातोरुपधाया इकारो वक्तव्यः अङि परे । ततः द्वित्वं भवति । 'झसात् खपाः' । अतिष्ठिपत् अतिष्ठिपताम् अतिष्ठिपन् अतिष्ठिपः अतिष्ठिपतम् अतिष्ठिपत इत्यादीनि ॥ ८ ॥

**पादेर्युक्** ॥ पाशाछाह्वेञ्व्येञां युगागमो भवति ञौ परे ॥ ॥ ९ ॥ पाययति ॥ **पिबतेरङि पूर्वस्येकारोपधालोपौ वक्तव्यौ** ॥ १० ॥ अपीप्यत् ॥

( च० ) पा पाने । पिबन्तं प्रेरयति इति विग्रहे 'धातोः प्रेरणे' अनेन ञिप्रत्ययः । पा ञि इति जाते। सूत्रम्—'पादेर्युक्' पादेः युक् ॥ पाशाछासाह्वेञ्व्येञामेतेषां धातूनां युगागमो भवति ञिप्रत्यये परे । पुकोऽपवादः । पाय् ञि इति जाते । 'स धातुः' अन्यत्साधनं पूर्ववत् । पाययति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । पाययांचकार । 'ञेः' । पाय्यात् । 'सिसता०' । पाययिता । पाययिष्यति । अपाययिष्यत् । अपापाय् ञि अङ् दिप् । 'ञेः' अनेन ञेर्लोपो भवति ॥ सूत्रम्—'पिबतेः०' । पिबतेर्धातोरङि पूर्वस्य ईकारोपधालोपौ वक्तव्यौ । सुगममिदं सूत्रम् । अनेन पूर्वस्य ईकारो भवति उपधालोपश्च । अपीप्यत् अपीप्यताम् अपीप्यन् । इत्यादीनि ॥ ९–१० ॥

शो तनूकरणे । सन्ध्यक्षराणामा । शाययति । अशीशयत् ॥

( च० ) शो तनूकरणे । 'सन्ध्यक्षराणामा०' । श्यन्तं प्रेरयति । 'पादेर्युक्' । अन्यत्साधनं सुगमम् । शाययति । लिट्लकारे । शाययाञ्चकार । 'ञेः' । शाय्यात् । 'सिसता०' । शाययिता । शाययिष्यति । अशाययिष्यत् । शाय् ञि दिप् इति जाते । 'ञेरङ् द्विश्च' 'अञि लघौ' । 'लघोर्दीर्घः' । 'दिबादावट्' । अशीशयत् अशीशयताम् अशीशयन् ॥

छो छेदने । अचीछयत् ॥

( च० ) छो छेदने । सन्ध्यक्षराणामा०' । एकः छ्यति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'पादेर्युक्' । अनेन युगागमो भवति । छाययति । छाययांचकार । 'ञेः' । छाय्यात् । 'सिसता०' । छाययिता । छाययिष्यति । अच्छाययिष्यत् । लुङ्लकारे । 'झपानाम्०' । अनेन छकारस्य चकारः । अन्यत्साधनं सुगमम् । अचीच्छयत् अचीच्छयताम् अचीच्छयन् ॥

षोऽन्तकर्मणि । साययति । असीषयत् ॥

( च० ) षो अन्तकर्मणि । 'आदेः ष्णः स्नः' । 'सन्ध्यक्षराणामा' । एकः स्यति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'पादेर्युक्' । साययति । साययांचकार । 'ञेः' । साय्यात् । 'सिसता०' । साययिता । साययिष्यति । असाययिष्यत् । लुङ्लकारेऽपि पूर्ववत् साधनम् । असीषयत् असीषयताम् असीषयन् । इत्यादीनि ॥

ह्वेञ् स्पर्धायाम् ॥ **ह्वयतेरङि संप्रसारणं युगभावश्च वक्तव्यः ॥ ११ ॥ कृतसंप्रसारणस्य ह्वयतेरङि क्रमाद्गुणवृद्धी वाच्ये ॥ १२ ॥**अजुहावत् अजूहवत् अजूहवताम् ॥

( च० ) ह्वेञ् स्पर्धायाम् । एको ह्वयति तमन्यः प्रेरयति । 'संध्यक्ष०' । 'धातोः प्रेरणे' । 'पादेर्युक्' । ह्वाययति । ह्वाययांचकार । लुङ्लकारे ॥ सूत्रम्—'ह्वयतेः०' ह्वयतेर्धातोरङि परे सति संप्रसारणं युगभावश्च वक्तव्यः । कृतसंप्रसारणस्य ह्वयतेर्धातोरञि क्रमाद्गुणवृद्धी वाच्ये । 'कुहोश्चुः' । अनेन हस्य जः । अजुहावत् । अजुहावताम् अजुहावन् गुणे कृते सति । अजुहवत् अजुहवताम् अजुहवन् ॥ ११-१२ ॥

व्येञ् संवरणे । व्याययति । अविव्ययत् ॥

( च० ) व्येञ् संवरणे । 'सन्ध्यक्षराणामा०' । 'पादेर्युक्' । एको व्ययति तमन्यः प्रेरयति व्याययति । व्याययाञ्चकार । लुङ्लकारे । व्याय् ञि दिप् इति जाते । 'ञेरङ् द्विश्च' । 'ञेः' । 'पूर्वस्य०' । 'अङि लघोः । अवीव्ययत् अवीव्ययताम् अवीव्ययन् ॥

वेञ् तन्तुसंताने । वाययति अवीवयत् ॥

( च० ) वेञ् तन्तुसंताने । एको वयति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'सन्ध्यक्ष०' । 'पादेर्युक्'। वाययति । लिट्लकारे । 'कासादि०' अनेनाम्प्रत्ययो भवति । वाययांचकार । 'ञेः' । वाय्यात् । 'सिसता०' । वाययिता । वाययिष्यति । अवाययिष्यत् । लुङ्लकारे पूर्वोक्तैरेव सूत्रै रूपाणां सिद्धिः । अवीवयत् अवीवयताम् अवीवयन् ।

**पातेर्ञौ लुग्वक्तव्यः** ॥ युकोऽपवादः ॥ १३ ॥ पालयति अपीपलत् ॥

( च० ) पा रक्षणे । 'धातोः प्रेरणे' ॥ सूत्रम्—'**पाते०ः**' । पातेर्धातोर्ञिप्रत्यये परे लुगागमो वक्तव्यः । पुकोऽपवादः । पालयति । लिट् । पालयांचकार । लुङ् । अपीपलत् अपीपलताम् । अपीपलन् ॥ १३ ॥

रभ राभस्ये । रभसो वेगहर्षयोः ॥ **रभलभोः स्वरे णाद्यपौ विना नुम्वाच्यः ॥ १४ ॥** रम्भयति । अररम्भत् ॥

( च० ) रभ राभस्ये वेगहर्षार्थयोः । सूत्रम्—'**रभलभोः०**' । रभलभोर्णाद्यपौ विना स्वरे परे नुम् वाच्यः । 'नश्चापदान्ते' । 'धातोः प्रेरणे' । रम्भयति । लिट्लकारे रम्भयांचकार । 'ञेः' । रम्भ्यात् । 'सिसता०' रम्भयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । अनेनाङ्प्रत्ययः । धातोर्द्वित्वम् । अङ्कार्यं न स्यात् । अररम्भत् अररम्भताम् । अररम्भन् । इत्यादीनि ॥ १४ ॥

डुलभष् प्राप्तौ । लम्भयति । अललम्भत् ॥

( च० ) डुलभष् प्राप्तौ । डुकारषकारावितौ । 'धातोः प्रेरणे' । 'रभलभोः' । अनेन नुम् । अन्यत्साधनं पूर्ववत् । लम्भयति । लिट्लकारे । लम्भयांचकार । 'सिसता' । लम्भ-

यिता । लुङ्लकारे । अललम्भत् अललम्भताम् अललम्भन् ॥

प्रीञ् तर्पणे ॥ **प्रीञ्धूञोर्नुक्** ॥ अनयोर्नुगागमो भवति णौ परे ॥ १५ ॥ प्रीणयति । अपिप्रिणत् ॥

( च० ) प्रीञ् तर्पणे 'धातोः प्रेरणे' । एकः प्रीणाति । तमन्यः प्रेरयति ॥ सूत्रम्— '**प्रीञ्धूञोर्नुक्**' प्रीञ् च धूञ् च प्रीञ्धूञौ तयोः प्रीञ्धूञोः नुक् अनयोः प्रीञ्धूञोर्धात्वोर्नुगागमो भवति । ङिप्रत्यये परे णत्वं भवति । प्रीणयांचकार लुङ्लकारे । 'ञेरङ् द्विश्च' । 'पूर्वस्य ह्रस्वः' । अङि लघौ' । अनेनोपधाया ह्रस्वः । अपिप्रिणत् अपिप्रिणताम् अपिप्रिणन् ॥ १५ ॥

धूञ् कम्पने । धूनयति । अदुधूनत् ॥

( ल० ) धूञ् कम्पने । 'धातोः प्रेरणे' । प्रीङ्धूञोर्नुक् । धूनयति । धूनयांचकार । धून्यात् । धूनयिता । लुङ्लकारे । 'ञेरङ्' । 'अङि लघौ' । 'लघोर्दीर्घः' । 'झपानाम्०' । अदूधुनत् अदूधुनताम् । अदूधुनन् ।

स्मिङ् ईषद्धसने ॥ **स्मयतेरात्वं णौ वाच्यम्** ॥ १६ ॥ विस्मापयते । असिष्मपत । आति किम् ! विस्माययति असिष्मयत् ॥

( च० ) स्मिङ् ईषद्धसने । एकः स्मयति तमन्यः प्रेरति । 'धातोः प्रेरणे' । सूत्रम्— '**स्मयतेः०**' स्मयतेर्धातोरात्वं वा भवति ञिप्रत्यये परे । अनेनात्वं वा । स्मापयते । अत्र 'रातो णौ पुक्' । अनेन पुक् । स्मापयांचकार । लुङ्लकारे । पूर्वस्येकारः । षत्वम् । असिष्मपत असिष्मपेताम् असिष्मपन्त । आत्वाभावपक्षे वृद्धिः । 'ऐआय्' । विस्माययति । विस्माययाञ्चकार । लुङ्लकारे । असिष्मयत् असिष्मयताम् असिष्मयन् साधनं सुगमम् ॥ १६ ॥

( प्र० ) **स्मयतेरिति** । एवं सति "विस्मापयन् विस्मितमात्मवृत्तौ" इत्यपपाठः । मनुष्यवाचेतिकरणादेव विस्मयात् । अन्यथा शानोऽपि स्यात् । ण्यन्तात् णौ शता वा । विस्मापयते मनुष्यवाक् तया सिंहो विस्मापयन्निति ॥ १६ ॥

**रुहेर्णौ पो वा वाच्यः** ॥ रुह बीजजन्मनि प्रादुर्भावे च । रोहयति रोपयति । अरूरुहत् अरूरुपत् ॥

( च० ) रुह बीजजन्मनि प्रादुर्भावे च । 'धातोः प्ररणे । सूत्रम्—'रुहेः' रुहेर्धातोर्ङिप्रत्यये परे पोवा वाच्यः । 'षष्ठी' अनेनान्तस्यैव । 'उपधायाः' अनेन गुणः। रोपयति रोपयाञ्चकार लुङ्लकारे अङ्कार्यं भवति । अरूरुपत् अरूरुपताम् अरूरुपन् । पत्वाभावपक्षे । रोहयति रोहयाञ्चकार । अङ्कार्यं सर्वं भवति । अरूरुहत् अरूरुहताम् अरूरुहन् ॥ १७ ॥

( प्र ) रुहेरिति । रुपविमोहने इति दैवादिकस्यापि रोपयतीति सिद्धम् ॥

कृपू सामर्थ्ये । कृपो रो लः । कल्पयति ॥ **उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः** ॥ इररामपवादः । अचीकॢपत्-अचकल्पत् ॥

( च० ) कृपू सामर्थ्ये। 'धातोः प्ररणे'। गुणो भवति। 'कृपो रो लः' अनेन रकारस्य लः। कल्पयति। कल्पयाञ्चकार। 'जेः' कल्प्यात्। 'सिसता-'। कल्पयिता॥ 'उपधाया ऋवर्णस्य०'। अचीक्लृपत्। विकल्पेन। अत्राङ्कार्यं न भवति अचकल्पताम् अचकल्पन्।

वृतु वर्तने। वर्तयति। अवीवृतत्-अववर्तत्॥

( च० ) वृतुङ् वर्त्तते। 'धातोः प्रेरणे'। 'उपधाया लघोः'। वर्तयति। वर्तयांचकार। 'उपधाया ऋवर्णस्य०'। अनेन वा ऋकारस्य ऋकारः। यदा ऋकारस्तदा अङ्कार्यं भवति। अवीवृतत् अवीवृतताम् अवीवृतन्। ऋकाराभावपक्षे अङ्कार्यं न भवति। सूत्रप्राप्त्यभावात्। अववर्तत् अववर्तताम् अववर्तन्॥

मृजूष् शुद्धौ। मार्जयति। अमीमृजत् अममार्जत्॥

( च० ) मृजूष् शुद्धौ। 'धातोः प्रेरणे'। 'मृजेः' अनेन वृद्धिः। मार्जयति। लिट्लकारे। 'कासादि०' अनेनाम्। मार्जयांचकार। अन्येषां सुगमानि। लुङ्लकारे। 'उपधायाः'। अन्यत्साधनं सुगमम्। अमीमृजत् अमीमृजताम् अमीमृजन्। 'मृजेः' अनेन वृद्धिः। अममार्जत् अममार्जताम् अममार्जन्॥

**इङादेर्णौ पुक् च॥** इङ्क्रीजीनामात्वं भवति णौ परे ह्रीव्लीरीक्नूयीक्ष्मायीनां पुगागमो भवति णौ परे॥ १९॥ इङ् अध्ययने। अध्यापयति। अध्यापिपत्॥ **अङ्परे णौ इङो गाङ् वा वक्तव्यः॥२०॥** अध्यजीगपत्॥

( च० ) इङ् अध्ययने। 'धातोः प्रेरणे'॥ सूत्रम्—'इङादेर्णौ पुक् च'॥ इङादेः णौ पुक् च। इङ्क्रीजीनां धातूनां ञिप्रत्यये परे आत्वं भवति। ह्रीव्लीरीक्नूयीक्ष्मायीनां धातूनां ञिप्रत्यये पुगागमो भवति। एकोऽधीते तमन्यः प्रेरयति। 'इ यं स्वरे'। अध्यापयति। अध्यापयांचकार। लुङ्लकारे। 'अङि लघौ' अनेन पूर्वस्येकारः। अध्यापिपत् अध्यापिपताम् अध्यापिपन्॥ 'अङ्परे०' अङ्परे ञिप्रत्यये परे इङो धातोर्गाङ् वा वाच्यः। अनेन वा इत्यादेशः। पुगागमः। ततो द्वित्वम्। 'कुहोश्चुः'। 'अङि लघौ'। 'लघोर्दीर्घः' अध्यजीगपत् अध्यजीगपताम् अध्यजीगपन्॥ १९-२०॥

डुक्रीञ् द्रव्यविनिमये। क्रापयति अचिक्रपत्॥

( च० ) डुक्रीञ् द्रव्यविनिमये। एकः क्रीणाति तमन्यः प्रेरयति 'धातोः प्रेरणे' 'इङादेर्णौपुक्' अनेनात्वपुकौ। क्रापयति। लिट्। आम्प्रत्ययः। क्रापयांचकार। 'जेः' क्राप्यात्। 'सिसता०'। क्रापयिता। क्रापयिष्यति। अक्रापयिष्यत्। लुङ्लकारे। 'ञेरङ् द्विश्च'। 'अङि लघौ'। अचिक्रपत् अचिक्रपताम् अचिक्रपन्॥

जि जये। जापयति। अजीजिपत्॥

( च० ) जि जये। एको जयति तमन्यः प्रेरयति। 'धातोः प्रेरणे'। आत्वपुकौ। जापयति। लिट्लकारे। जापयांचकार। 'जेः'। जाप्यात। 'सिसता०'। जापयिता।

जापयिष्यति । अजापयिष्यत् । लुङ्लकारे । 'णेरङ् द्विश्च' । 'अङि लघौ' । 'लघोदीर्घः' 'अजीजपत् अजीजपताम् अजीजपन् ॥

ह्री लज्जायाम् । ह्रेपयति । अजीह्रिपत् ॥

( च० ) ह्री लज्जायाम् । एको जिह्रेति । तमन्यः प्रेरयति । 'धातोः प्रेरणे' । पुग् भवति । गुणः । ह्रेपयति । ह्रेपयांचकार । लुङ्लकारे । 'णेरङ् द्विश्च' । 'अङि लघौ' । 'कुहोश्चुः' । अजीह्रिपत् अजीह्रिपताम् अजीह्रिपन् ॥

( प्र० ) ह्रेपयतीति । उपधाया लघोरित्यत्रोपधाया इत्यस्य योगविभागाद्धातोरुपधाया नामिनो गुणो भवति ॥ तेन गुरोरपि भवति ॥ दीर्घस्यापि गुणो भवतीत्यर्थः ॥

व्ली वरणे । व्लेपयति । अवीव्लिपत् ॥

( च० ) व्ली वरणे । 'धातोः प्रेरणे' । पुक् । गुणः । अन्यत्सर्वं पूर्ववत् । व्लेपयति । व्लेपयांचकार । 'णेः' व्लेप्यात् । 'सिसता०' । व्लेपयिता । व्लेपयिष्यति । अव्लेपयिष्यत् । लुङ्लकारे । 'णेरङ्द्विश्च' । 'अङि लघौ' । अवीव्लिपत् अवीव्लिपताम् अवीव्लिपन् ॥

रीङ् क्षरणे । रेपयति । अरीरिपत् ॥

( च० ) रीङ् क्षरणे । 'धातोः प्रेरणे' । पुक् । गुणः । रेपयति । रेपयांचकार । 'णेः' रेप्यात् । रेपयिता । लुङ्लकारे । पूर्ववत् साधना । अरीरिपत् अरीरिपताम् अरीरिपन् ॥

क्नूयी दुर्गन्धे ॥ **यवयोर्वसे हकारे च लोपो वक्तव्यः** ॥२१॥ क्नोपयति । अचुक्नुपत् ॥

( च० ) क्नूयी दुर्गन्धे । ईकार इत् । 'धातोः प्रेरणे' । 'णौ परे' पुगागमः ॥

'यवयोः०' अनेन यकारस्य लोपः । गुणः । क्नोपयति । क्नोपयांचकार । णेः' । क्नोप्यात् । 'सिसता०' । क्नोपयिता । क्नोपयिष्यति । अक्नोपयिष्यत् लुङ्लकारे णेरङ् द्विश्च' । 'अङि लघौ' ।'कुहोश्चुः' । अचुक्नुपत् अचुक्नुपताम् अचुक्नुपन् ॥

क्ष्मायी विधूनने । एकः क्ष्मायति तमन्यः प्रेरयति क्ष्मापयति अचिक्ष्मपत् ॥

( च० ) क्ष्मायी विधूनने । 'धातोः प्रेरणे' । पुगागमः । 'यवयोः' । अनेन यकारस्य लोपः । क्ष्मापयति । क्ष्मापयांचकार । क्ष्माप्यात् । 'सिसता०' । क्ष्मापयिता । क्ष्मापयिष्यति । अक्ष्मापयिष्यत् । लुङ्लकारे । 'णेरङ् द्विश्च' पूर्वस्य । 'अङि लघौ' । 'कुहोश्चुः' । अचिक्ष्मपत् अचिक्ष्मपन् ॥

लीङ् श्लेषणे ॥ **लीयतेर्णावात्वं वा** ॥ २२ ॥ विलापयति व्यलीलपत् ॥ [ **लीलोः पुग् वक्तव्यः** ॥ २३ ॥ विलेपयति व्यलीलिपत् ॥ ] **लीलाणौ क्रमान्नुग्लुकौ वा** ॥ २४ ॥ विलीनयति । व्यलीलिनत् ॥

( च० ) लीङ् श्लेषणे । एको लिनाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' ॥ सूत्रम्— **'लीयतेः०'**॥ लीयतेर्धातोर्णौ परे आत्वं वा भवति । रातो णौ पुक् च' । विपूर्वोऽयम् । विलापयति । विलापयांचकार । विलाप्यात् । 'सिसता०' । विलापयिता । लुङ्लकारे ।

व्यलीलपत् व्यलीलपताम् व्यलीलपन् [ सूत्रम्—'लीलो:०'॥ ली ला एतयोर्धात्वोः पुग् वक्तव्यः । तदा विलेपयति । विलेपयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । व्यलीलिपत् व्यलीलिपताम् व्यलीलिपन् ॥ ] सूत्रम्—'लीलो:०'॥ ली ला एतयोर्धात्वोः क्रमात् नुग्लुकौ वा भवतः । तदा विलीनयति । विलीनयांचकार । विलीन्यात् । 'सिसता०' । विलीनयिता । विलीनयिष्यति । लुङ्लकारे । पूर्वसूत्रैरेतद्रूपाणां सिद्धिः । व्यलीलिनत् व्यलीलिनताम् व्यलीलिनन् ॥ २२-२४ ॥

ला ग्रहणे । लापयति । अलीलपत् ॥ लालयति । अलीललत् अलीललताम् ॥

( च० ) ला ग्रहणे । एको लाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । पुक् । लापयति । लापयाञ्चकार । लाप्यात् । लापयिता । लापयिष्यति । अलापयिष्यत् । लुङ्लकारे । अलीलपत् अलीलपताम् अलीलपन् । लुगागमे कृते सति । लालयति । लालयांचकार । लाल्यात् । 'सिसता०' । लालयिष्यति । लुङ्लकारे 'ञेरङ् द्विश्च' । 'अङि लघौ' 'लघोर्दीर्घः' । अलीललत् अलीललताम् अलीललन् ॥

**न रितः ॥ ऋकारेतोऽनेकस्वरस्य शासश्चाङि उक्तं कार्यं न भवति ॥ ॥२५॥ ढौकृ गतौ । ढौकयति अडुढौकत् ॥**

( च० ) ढौकृ गतौ । ऋकार इत् । एको ढौकति तमन्यः प्रेरयति । 'धातोः प्रेरणे' ढौकयति । चतुर्णां सुगमानि । ढौकयाञ्चकार । 'ञेः' । ढौक्यात् । 'सिसता०' । ढौकयिता । ढौकयिष्यति । अढौकयिष्यत् । लुङ्लकारे । 'ञेरङ् द्विश्च' ॥ सूत्रम्—'न रितः' ॥ न ऋ इत् यस्यासौ रित् तस्य रितः ऋकारानुबन्धस्य अनेकस्वरस्य च शासो धातोरङि प्रत्यये परे 'अङि लघौ' 'लघोर्दीर्घः' इति द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । 'ह्रस्वः' । 'झपानाम्०' अडुढौकत् अडुढौकताम् अडुढौकन् इत्यादीनि ॥ २५ ॥

टुयाचृ याञ्चायाम् । याचयति । अययाचत् ॥

( च० ) टुयाचृ याञ्चायाम् । ऋकार इत् । 'धातोः प्रेरणे' । याचयति । याचयांचकार । 'ञेः' याच्यात् । 'सिसता०' । याचयिता । याचयिष्यति । अयाचयिष्यत् । लुङ्लकारे । 'न रितः' अन्यत्सुगमम् । साधनं पूर्ववत् । अययाचत् अययाचताम् अययाचन् ॥

शासु अनुशिष्टौ । शासयति । अशशासत् ॥

( च० ) शासु अनुशिष्टौ । एकः शास्ति तमन्यः प्रेरयति । 'धातोः प्रेरणे' शासयति । शासयाञ्चकार । शासयिता । लुङ् । 'न रितः' । अशशासत् अशशासताम् अशशासन् ॥

दरिद्रा दुर्गतौ । दरिद्रयति । अददरिद्रत् अददरिद्रताम् ॥

( च० ) दरिद्रा दुर्गतौ । एको दरिद्राति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'णप् वुण्'—अनेन आकारस्य लोपः—दरिद्रयति । लिट्लकारे । 'कासादि०' दरिद्रयाञ्चकार । 'ञेः'—दरिद्र्यात् । 'सिसता०—' दरिद्रयिष्यति । अदरिद्रयिष्यत् । लुङ्लकारे—'न रितः' 'सस्वरादिः' । अददरिद्रत् अददरिद्रताम् अददरिद्रन् ॥

दुष वैकृत्ये ॥ **दुषेर्ञौ वा दीर्घो वक्तव्यः ॥ २६ ॥** दूषयति दोषयति । अदूदुषत् ॥

( च० ) दुष वैकृत्ये । 'धातोः प्रेरणे' ॥ सूत्रम्—'दुषेः०' ॥ दुषेर्धातोर्ञिप्रत्यये परे वा दीर्घः । दूषयति । दूषयाञ्चकार । लुङ्लकारे । 'ञेरङ् द्विश्च' 'अङि लघौ' 'लघोर्दीर्घः' । अदूदुषत् अदूदुषताम् अदूदुषन् : दीर्घाभावपक्षे दोषयति । दोषयाञ्चकार । 'ञेः' । दोष्यात् । 'सिसता०—' दोषयिता । दोषयिष्यति । अदोषयिष्यत् । लुङ्लकारे—पूर्वसूत्रैरेव सिद्धिः । अदूदुषत् अदूदुषताम् अदूदुषन् ॥ २६ ॥

( प्र० ) दूषेरिति । अत्रेदं वक्तव्यम्—'दुषेर्ञौ दीर्घो चित्तविरागे वा' इति । विरागोऽप्रीतता । दूषयति दोषयति वा चित्तं कामः । चित्तं दूष्यति स्नानसन्ध्यादौ विरक्तं भवति । तत्प्रयुंक्त इत्यर्थः ।। २६ ।।

घट चेष्टायाम् ॥ **मितां ह्रस्वः ॥** धातुपाठे मित इत्येवं पठितानां धातूनां ह्रस्वो भवति ञौ परे ॥२७॥ घटयति । अजीघटत् ॥

( च० ) घट चेष्टायाम् । 'धातोः प्रेरणे' । 'अत उपधायाः' । 'मितां ह्रस्वः' अनेन ह्रस्वः । घटयति । लिट्लकारे 'कासादि०' । अनेनाम् । घटयांचकार । 'ञेः' । घट्यात् । 'सिसता०' । घटयिता । घटयिष्यति । अघटयिष्यत् । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । झपानाम्० । अजीघटत् । अजीघटताम् । अजीघटन्॥२७॥

व्यथ दुःखभयचलनयोः । व्यथयति । अवीव्यथत् ॥ एवं पञ्चपञ्चाशतो रूपम् ॥

( च० ) व्यथ दुःखभयचलनयोः । एको व्यथति तमन्यः प्रेरयति 'धातोः प्रेरणे' । 'अत उपधायाः' । 'मितां ह्रस्वः' अनेन ह्रस्वो भवति । अन्यत्सुगमम् । व्यथयति । लिट्लकारे आम्प्रत्ययो भवति । व्यथयांचकार । 'ञेः' व्यथ्यात् । 'सिसता०'—व्यथयिता । व्यथयिष्यति । अव्यथयिष्यत् । लुङ्लकारे—'ञेरङ्द्विश्च' । 'पूर्वस्य'—'अङि लघौ' । अवीव्यथत् अवीव्यथताम् अवीव्यथन् ॥

**जनीजृषुक्नसुरञ्जोऽमन्ताश्च ॥२८॥** एतेऽपि मितः ॥ जनयति । अजीजनत् ॥

( च० ) जनी प्रादुर्भावे । एको जायते तमन्यः प्रेरयति । 'धातोः प्रेरणे' । वृद्धिः । 'मितां ह्रस्वः' । जनयति । लिट्लकारे—'कासादि०' । जनयांचकार । 'ञेः'—जन्यात् । 'सिसता०' जनयिता । जनयिष्यति । अजनयिष्यत् । लुङ्लकारे—'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । अजीजनत् अजीजनताम् अजीजनन् । इत्यादीनि ॥ २८ ॥

जृष् वयोहानौ । ष् इत् । जरयति । अजीजरत् ॥

( च० ) जृष् वयोहानौ । ष् इत् । 'धातोः प्रेरणे' । एको जृणाति तम्० । 'धातोः नामिनः अनेन वृद्धिः । 'मितां ह्रस्वः' । अन्यत्सुगमम् । जरयांचकार । 'ञेः'—जर्यात् ।

'सिसता०' जरयिता । जरयिष्यति । अजरयिष्यत् । लुङ्लकारे—त्रिसूत्रैः कार्यसिद्धिः । अजीजरत् अजीजरताम् अजीजरन् ॥

क्रसु ह्वरणदीप्त्योः । क्रसयति । अचिक्रसत् ॥

( च० ) क्रसु ह्वरणदीप्त्योः । 'धातोः प्रेरणे' । वृद्धिः । 'मितां ह्रस्वः' । क्रसयांचकार । 'ञेः' । क्रस्यात् । 'सिसता०'—क्रसयिता । क्रसयिष्यति । अक्रसयिष्यत् । लुङ्लकारे—'ञेरङ् द्विश्च' । 'अङि लघौ' । अचिक्रसत् अचिक्रसताम् अचिक्रसन् ॥

रञ्ज रागे ॥ रञ्जेर्ञौ मृगरमणेऽर्थे नलोपो वाच्यः ॥ २६ ॥ रजयति मृगान् । अरीरजत् ॥

( च० ) रञ्ज रागे । एको रज्यति तम्० । 'धातोः प्रेरणे' ॥ सूत्रम्—'रञ्जेर्ञौ' रञ्जेर्धातोर्मृगरमणेऽर्थे नकारस्य लोपो वाच्यः । अनेन सूत्रेण नकारस्य लोपो भवति । 'अत उपधायाः' । 'मितां ह्रस्वः' । रजयति । रजयाञ्चकार । 'ञेः'—रज्यात् । 'सिसता०' । रजयिता । रजयिष्यति । लुङ्लकारे—त्रिसूत्रैः कार्यसिद्धिः प्रायः । अरीरजत् अरीरजताम् अरीरजन् । मृगरमणाभावेऽर्थे नकारस्य लोपो न भवति । रञ्जयति । रञ्जयाञ्चकार । अररञ्जत् अररञ्जताम् अररञ्जन् ॥ २९ ॥

( प्र० ) रञ्जेरिति । मृगरमणमाखेटः । मृगेति किम् , रञ्जयति पक्षिणः । रमणे किम् , रञ्जयति मृगान् तृणदानेन । अत्र ''मृगरमण इति किमर्थम् ? रञ्जयति वस्त्राणी''ति भाष्यालोचने तु यथाश्रुतमेव मृगरमणम् । तथा च 'रजयां चकार विरजाः स मृगान्' इति भारविप्रयोगः साधुत्वमायाति ॥ २९ ॥

शम दम उपशमने । शमयति । अशीशमत् । दमयति अदीदमत् ॥

( च ) शम् दम् उपशमे । एकः शाम्यति तम्० । 'धातोः प्रेरणे' । 'मितां ह्रस्वः' । शमयति । शमयांचकार । 'ञेः' । शम्यात् । 'सिसता०' । शमयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । अशीशमत् अशीशमताम् अशीशमन् ॥ दमयति । दमयांचकार । अदीदमत् अदीदमताम् अदीदमन् । एतेषां रूपाणां पूर्वोक्तैरेव सूत्रैः सिद्धिः ॥

जानातेर्ञौ वा ह्रस्वः ॥ ३० ॥ ज्ञाऽवबोधने । एकः जानाति तमन्यः प्रेरयतीति ज्ञपयति । अजिज्ञपत् ॥

( च० ) अवबोधने । 'धातोः प्रेरणे' । एको जानाति तमन्यः प्रेरयति ॥ 'जानातेः०' । जानातेर्धातोर्ञिप्रत्यये परे वा ह्रस्वो भवति । ज्ञपयति । अत्र प्रथमं पुकं कृत्वा पश्चात् ह्रस्वो भवति ॥ ह्रस्वाभावपक्षे । ज्ञापयति । ज्ञपयाञ्चकार । ज्ञापयाञ्चकार । लुङ्लकारे तु । अजिज्ञपत् । त्रिसूत्रैः । अजिज्ञपताम् अजिज्ञपन् ॥ ३० ॥

ज्वलग्लास्नाश्च वा मितः ॥ ३१ ॥ ज्वल दीप्तौ । ज्वलयति ज्वालयति । अजिज्वलत् ॥

( च० ) ज्वल दीप्तौ । 'धातोः प्रेरणे' । एको ज्वलति तम्० । 'अत उपधायाः ॥ सूत्रम्—'ज्वलग्लास्नाः०' ॥ ज्वलग्लास्ना एते धातवो वा मितो भवन्ति । 'मितां ह्रस्वः' । ज्वलयति । मित्त्वाभावे । ज्वालयति । ज्वलयाञ्चकार । ज्वालयांचकार । 'ञेः' । ज्वल्यात् । ज्वाल्यात् । 'सिसता०' । ज्वलयिता । ज्वालयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । अङि लघौ' । अजिज्वलत् अजिज्वलताम् अजिज्वलन् ॥ ३१ ॥

ग्लै हर्षक्षये । ग्लपयति ग्लापयति । अजिग्लपत् ॥

( च० ) ग्लै हर्षक्षये । 'धातोः प्रेरणे' । 'संध्यक्षराणामा०' । 'रातो ञौ पुक् च' । 'ज्वल०' । अनेन वा मित्त्वम् । ग्लापयति । ग्लपयति । ग्लापयांचकार । ग्लपयांचकार । 'ञेः' । ग्लाप्यात् । ग्लप्यात् । सिसता०' । ग्लापयिता । ग्लपयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । अजिग्लपत् अजिग्लपताम् अजिग्लपन् । इत्यादीनि ॥

ष्णा शौचे । आदेः ष्णः स्नः । स्नापयति । स्नपयति । असिस्नपत् ॥

( च० ) ष्णा शौचे । एकः स्नाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । वा मित्त्वम् । 'रातो ञौ पुक् च' स्नपयति स्नापयति । लिट्लकारे । 'कासादि०' । स्नपयांचकार । स्नापयांचकार । लुङ्लकारे । 'पूर्वस्य' । अङि लघौ । असिस्नपत् असिस्नपताम् असिस्नपन् ॥

ओस्फायी वृद्धौ ॥ **स्फायो वकारः स्यात् ञौ परे ॥ ३२ ॥** स्फावयति । अपिस्फवत् ॥

( च० ) ओस्फायी वृद्धौ । ओकारेकारावितौ । 'धातोः प्रेरणे' ॥ सूत्रम्—स्फायः' ।। स्फायो धातोर्वकारः स्यात् ञिप्रत्यये परे । 'षष्ठी' अनेनान्त्यस्यैव भवति । स्फावयति । लिट्लकारे—'कासादि०'-अनेनाम्प्रत्ययो भवति । स्फावयांचकार । 'ञेः'—'स्फाव्यात्' । 'सिसता०' । स्फावयिता । स्फावयिष्यति । अस्फावयिष्यत् । लुङ्लकारः । 'ञेरङ् द्विश्च' 'झसात्०' 'झपानाम्०' । 'अङि लघौ' । अपिस्फवत् । अपिस्फवताम् । अपिस्फवत् ।। ३२ ।।

**भियो ञौ वा षुगात्वे वाच्ये ॥ ३३ ॥** भीषयति भापयति भाययति अबीभिषत् अबीभपत् अबीभयत् ॥

( च० ) ञिभी भये । ञिकार इत । एको बिभेति तम्० । 'धातोः प्रेरणे' ॥ सूत्रम्—'भियः०' ॥ भियो धातोर्ञिप्रत्यये परे षुगात्वे क्रमाद् भवतः । भीषयति । भीषयांचकारः । लुङ्लकारे—'ञेरङ् द्विश्च' । 'झपानाम्०' । 'अङि लघौ' 'लघोर्दीर्घः' । अबीभिषत् अबीभिषताम् अबीभिषन् । आत्वे कृते । 'रातो ञौ पुक् च' भापयति । भापयांचकार । भाप्यात् । भापयिता । भापयिष्यति । लुङ्लकारे त्रिसूत्रैः पूर्वोक्तैरेव रूपसिद्धिः । अबीभपत् अबीभपताम् अबीभपन् । सूत्रे वाग्रहणं कृत्वा भाययति इति रूप-

मिच्छन्ति । भाययांचकार । लङ्लकारे पूर्वोक्तैरेव सूत्रैः सिद्धिः । अबीभयत् अबीभयताम् अबीभयन् ॥ ३३ ॥

( प्र० ) भियइति । भयजनकः प्रयोजकश्चेद्भियो वाकारः आत्वाभावे पुगागमश्च स्यात् णौ इति चन्द्रिकासम्मतोऽर्थः ॥ ३३ ॥

**व्यापारमात्रे ञिर्वक्तव्यः स च ङित्** ॥ ३४ ॥ हलं गृह्णातीति हलयति ॥

इति ञ्यन्तप्रक्रिया ॥ २७ ॥

( च० ) सूत्रम्—'व्यापारमात्रे ञिप्रत्ययो वक्तव्यः स च ङित्' ॥ हलं गृह्णाति इति । अत्रानेन ञिः प्रत्ययो भवति । ङित्वाट्टिलोपः । हलयति । लिट्लकारे—हलयांचकार । 'ञेः' हल्यात् 'सिसता०' । हलयिता । हलयिष्यति । अहलयिष्यत् । लुङ्लकारे—'ञेरङ्द्विश्च' । 'अल्लोपिनः०' अनेनास्याङ्कार्यं न भवति । 'कुहोश्चुः' । अजहलत् अजहलताम् अजहलन् । इत्यादीनि रूपाणि भवन्ति ॥ ३४ ॥

इति ञ्यन्तप्रक्रिया समाप्ता ॥ २७ ॥

( प्र० ) व्यापार०इति । क्रियासम्बन्धमात्र इत्यर्थः । मात्रपदेन विशिष्टार्थो वार्य्यते ॥ ३४ ॥

इति प्रसादे ञन्तप्रक्रिया समाप्ता ॥ २७ ॥

---

## सप्रक्रिया ॥ २८ ॥

अथ सप्रक्रिया निरूप्यते ॥ **इच्छायामात्मनः सः** ॥ धातोरिच्छायामर्थे सः प्रत्ययो भवति सा चेत्स्वसम्बन्धिनी, द्विश्च ॥ १ ॥ भवितुमिच्छति ॥ **वुः से** ॥ उश्च आश्च वृ तस्मात् वुः । उवर्णान्तादवर्णान्ताच्च ग्रहगुहोश्च स परे इट् न भवति ॥ २ ॥ **नानिटि से** ॥ इड्वर्जिते सप्रत्यये परे गुणो न भवति ॥ ३ ॥ स धातुः । धातुत्वादस्तिबादि । अदे ॥ बुभूषति ॥

( च० ) अथ सप्रक्रिया निरूप्यते ॥ सूत्रम्—'इच्छायामात्मनः सः' इच्छायां आत्मनः सः धातोरर्थसम्बन्धिन्यामिच्छायां वाच्यमानायां इच्छारूपेऽर्थे वाच्ये सति सः प्रत्ययो भवति । सा चेच्छा स्वसम्बन्धिनी चेत्, धातोर्द्वित्वं च भवति । भवितुमिच्छति इति विग्रहे अनेन सूत्रेण सः प्रत्ययः द्वित्वं च भवति । 'ह्रस्वः' । 'झपानाम्' । षत्वम् । नन्वत्र 'सिसता०' अनेनेट् कथं न क्रियते तत्राह ॥ सूत्रम्—'वुः से' ॥ उश्च ऋ च वृ तस्मात् वुः से अयं समासो बालबोधनार्थं दर्शितः । उवर्णान्तात् 'ग्रहउपादाने' 'गुहू संवरणे' इत्येताभ्यां परस्य स प्रत्ययस्य इडागमो न भवति । इति इडागमनिषेधः ॥ नन्वत्र गुणः न क्रियते तत्राह ॥ सूत्रम्—'नानिटि से' ॥ अस्य सूत्रस्य व्याख्यानं

कृतमस्ति । अनेन गुणनिषेधः । बुभूष इति जाते । 'स धातुः' अनेन धातुत्वात्तिबादयो भवन्ति । 'अप् कर्तरि' । 'अदे' बुभूषति । बुभूषेत् । बुभूषतु । अबुभूषत् । लिट्लकारे । 'कासादि०' अनेनाम् । बुभूषांचकार । 'यादादौ' । 'यतः' अनेन अकारस्य लोपः । बुभूष्यात् । 'सिसता०' । बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्या साधना पूर्ववत् । अबुभूषीत अबुभूषिष्टाम् अबुभूषिषुः ॥१-३॥

( प्र० ) इच्छायामिति । इष्टिरिच्छा । आत्मशब्दोऽत्र स्ववाची न तु चेतनद्रव्यवाची आत्मन इत्यस्य व्यर्थतापातात । इच्छायामात्मकर्त्तृकत्वाव्यभिचारात् । तच्चेष्यमाणमिच्छाकर्त्तृ सम्बन्धि भवति । 'आद्भुवि कर्म्मणि' इत्यत कर्म्मणीत्यनुवर्त्त्य पञ्चम्या विपरिणम्य कर्म्मणो धातोरिति सामानाधिकारण्येन व्याख्येयम् । इच्छायां किम् । कर्त्तुं याति । आत्मनः किम् । शिष्याणां पठनमिच्छति गुरुः । स्वसम्बन्धित्वं चेच्छायाः तेन शिष्याणां स्वसम्बन्धित्वेऽपि न । धातोः किम् । प्रतिष्ठासते इत्यत्र प्रसहितस्थाधातोर्माभूत् । तथा सति अड्द्वित्वयोर्वैषम्यं स्यात् । कर्म्मणः किम् । गमनेन इच्छतीति करणान्माभूत् । यत्तु केनचिद्व्याख्यातम् इच्छाचेत् स्वसम्बन्धिनीति । शिष्याणां पठनमिच्छति गुरुरित्यत्रातिव्याप्तेरनिवाराद । तथा हि अत्र पठनस्य धात्वर्थत्वेन तत्सम्बन्धिन्या इच्छायाः सत्त्वात् ॥ १-३ ॥

तॄ प्लवनतरणयोः ॥ **नाम्यन्तात्परस्य सस्य कित्त्वं वाच्यम्** ॥ ४ ॥ ऋत इर् । तरितुमिच्छति तितीर्षति । अतितीर्षीत् ॥

( च० ) तॄ प्लवनतरणाः । तरितुमिच्छतीति विग्रहे । 'इच्छायामात्मनः सः' अनेन सः प्रत्ययः धातोर्द्वित्वं च सूत्रम्—'नाम्यन्तात्०' ॥ नाम्यन्ताद्धातोः परस्य सस्य कित्त्वं वाच्यम् । 'ऋत इर्' अनेन इर् । पश्चाद्द्वित्वम् । 'य्वोर्विहसे' । षत्वम् । 'स धातुः' । तितीर्षति । लिट्लकारे । तितीर्षांचकार । 'सिसता०' । तितीर्षिता । लुङ् । अतितीर्षीत् अतितीर्षिष्टाम् अतितीर्षिषुः । इत्यादीनि ॥ ४ ॥

डुकृञ् करणे । कर्तुमिच्छति चिकीर्षति ॥ **से दीर्घः** ॥ से परे पूर्वस्य दीर्घो भवति ॥ ५ ॥

( च० ) डुकृञ् करणे । स प्रत्ययः । 'नाम्यन्तात्०' । 'ऋत इर्' ततः द्वित्वम् । 'कुहोश्चुः' । 'य्वोर्विहसे' । 'नैकस्वरात्' । अनेन इण्निषेधः । चिकीर्षति । चिकीर्षांचकार । अचिकीर्षीत् अचिकीर्षिष्टाम् अचिकीर्षिषुः । ऋृत इति तपरकरणात् ऋृकारस्यैव इर् क्रियते ॥ ५ ॥ [ स विधिः सार्वत्रिको न तेन ह्रस्वस्यापि ऋवर्णस्य इर् भवति ॥ ]

चिञ् चयने ॥ **चिनोतेः सणादौ कत्त्वं वा वाच्यम्** ॥ ६ ॥ चिकीषति चिचीषति ॥

( च० ) चिञ् चयने 'इच्छायाम्०' सूत्रम्—'चिनोते०' ॥ चिनोतेर्धातोः सप्रत्यये णादौ कत्त्वं वा वाच्यम्—अनेन चस्य कः । ततो द्वित्वम् । सूत्रम्—'से दीर्घः' सप्रत्यये परे पूर्वस्य दीर्घो भवति । 'नैकस्वरात्' षत्वम् । 'स धातुः' । चिकीषति । चिकीषांच-

कार । अचिकीष्यात् ॥ क्त्वाभावे । से दीर्घः । अन्यत्साधनं तु पूर्ववत् । चिचीषति । चिचीषांचकार । अचिचीषीत् ॥ ६ ॥

जि जये । सपरोक्षयोर्जेर्गिः । जेतुमिच्छति जिगीषति ॥

( च० ) जि जये । 'इच्छायाम्' । 'सपरोक्षयोर्जेर्गिः' । अनेन जस्य गः ततः द्वित्वम् । 'कुहोश्चुः' । 'से दीर्घः' । षत्वम् । 'नैकस्वरात्०' अनेन सूत्रेण सर्वेषां एकस्वराणां धातूनां सप्रत्यये परे इट् न भवति इति ज्ञातव्यम् । जिगीषति । जिगीषांचकार । 'सिसता०' । जिगीषिता । अजिगीषीत् ॥

यु मिश्रणे । युयूषति ॥

( च० ) यु मिश्रणे । 'इच्छायाम्०' । यवितुमिच्छति इति विग्रहे । सप्रत्ययः । धातोर्द्वित्वम् । 'से दीर्घः' । युयूषति । युयूषांचकार । 'यतः' । युयूष्यात् । 'सिसता' । युयूषिता । युयूषिष्यति । अयुयूषिष्यत् अयुयूषीत अयुयूषिष्टाम् अयुयूषिषुः ॥

डुपचष् पाके । यः से । पक्तुमिच्छति । पिपक्षति ॥

( च० ) डुपचष् पाके । पक्तुमिच्छति इति विग्रहे । 'इच्छायाम्०' । द्वित्वं 'पूर्वस्य' । 'यः से' । 'चोः कुः' । 'किलात्०' । 'कषसंयोगे०' । 'स धातुः' । पिपक्षति । पिपक्षांचकार । 'यतः' । पिपक्ष्यात् । 'सिसता०' । पिपक्षिता । पिपक्षिष्यति । 'दिवादावट्' । अपिपक्षिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अपिपक्षीत अपिपक्षिष्टाम् अपिपक्षिषुः । इत्यादीनि भवन्ति ॥

पातुमिच्छति पिपासति ॥

( च० ) पा पाने । पातुमिच्छति इति विग्रहे । 'इच्छायाम्०' । अनेन सप्रत्ययः धातोर्द्वित्वं च भवति । 'ह्रस्वः' । 'यः से' । पिपासति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । अनेन म् प्रत्ययो भवति । पिपासांचकार । 'यतः' । पिपास्यात् । 'सिसता' । पिपासिता । पिपासिष्यति अपिपासिष्यत् । अपिपासिष्टाम् अपिपासिषुः । एतेषां साधनं तु पूर्ववत् ॥

**गौणः प्रकृत्यर्थोऽन्यत्र सात्** ॥७॥ प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थः प्रधानीभूतः । अत्र सप्रत्यये तु वैपरीत्यं प्रकृत्यर्थः प्रधानीभूतः । तेन काष्ठेन पिपक्षतीत्यत्र तृतीयायाः पाकेन संबन्धो न त्विच्छया ॥

( च० ) ननु देवदत्तः काष्ठेन पिपक्षति । पक्तुमिच्छति इत्यत्र काष्ठेनेति साधनस्य किं पाकेन संबन्धः किं वा इच्छायाम् इत्याशङ्कायामाह—'**गौणः प्रकृत्यर्थोऽन्यत्र सात्**' ॥ सप्रत्ययादन्यत्र स्थाने अन्येषु प्रत्ययेषु प्रकृत्यर्थो धात्वर्थो गौणोऽमुख्यः । प्रत्ययार्थो मुख्यः । सप्रत्यये तु धातोरर्थो मुख्यः । अतोऽत्र काष्ठेन पिपक्षति इत्यत्र काष्ठेन साधनभूतेन यः पाकलक्षणो धात्वर्थस्तमिच्छति इत्यर्थः । अन्यथा पाकं काष्ठेन इच्छति इति स्यात् । अत्र इष्धातोरिच्छार्थस्य गौणत्वम् अतोऽत्र काष्ठस्य इच्छां प्रति साधनत्वाभावः । किन्तु पाकलक्षणं प्रकृत्यर्थं प्रति साधनत्वम् ॥ ७ ॥

मृङ् प्राणत्यागे । मर्तुमिच्छति मुमूर्षति । पोरुर् ॥

( च० ) मृङ् प्राणत्यागे । मार्तुमिच्छति । 'इच्छायाम्' । 'पोरुर्' । ततो द्वित्वम् । पूर्वस्य । 'य्वोर्विहसे' मुमूर्षांचकार । 'यतः' । मुमूर्ष्यात् । 'सिसता०' । मुमूर्षिता । मुमूर्षिष्यति । अमुमूर्षिष्यत । लुङ्लकारे । द्वाविटौ । सेर्लोपो भवति । अमुमूर्षीत् अमुमूर्षिष्टाम् अमुमूर्षिषुः इत्यादि ॥

पॄ पालनपूरणयोः । पुपूर्षति ॥

( च० ) पॄ पालनपूरणयोः । पूरितुमिच्छति । इति विग्रहे । 'इच्छायाम्'० । 'पोरुर्' । य्वोर्विहसे' । षत्वम् । विभक्तिकार्यं प्राग्वत् । पुपूर्षति । पुपूर्षांचकार । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे । अपुपूर्षीत् अपुपूर्षिष्टाम् । अपुपूर्षिषुः । इत्यादीनि ॥

**वृङ् इत्यस्य उर्वाच्यः ॥८॥** वृङ् वरणे । वरितुमिच्छति वुवूर्षति ।

( च० ) वृङ् वरणे । वरितुमिच्छति । 'इच्छायाम्०' ॥ 'वृङ्०' वृङो धातोः सप्रत्यये परे उर् वाच्यः । षष्ठी । अन्यत्साधनं पूर्वसदृशम् । वुवूर्षति । वुवूर्षांचकार । लुङ्लकारे । अवुवूर्षीत् अवुवूर्षिष्टाम् अवुवूर्षिषुः ॥ ८ ॥

**रुदविदमुषग्रहिस्वपिप्रच्छः सः किद्वाच्यः ॥९॥** रुदिर् अश्रुविमोचने । रुरुदिषति ॥

( च० ) रुदिर् अश्रुविमोचने । 'इच्छायाम्०' ॥ सूत्रम्-'रुद् विद्' रुद् विद् मुष ग्रहि स्वपि प्रच्छ एभ्यो धातुभ्यो सः कित् वाच्यः । द्वित्वम् । 'सिसता०' । षत्वम् । रुदितुमिच्छति । रुरुदिषति । लिट्लकारे । 'कासादि०' । रुरुदिषांचकार । 'यतः' । रुरुदिष्यात् । 'सिसता०' । रुरुदिषिता । रुरुदिषिष्यति । अरुरुदिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अरुरुदिषीत् अरुरुदिषिष्टाम् अरुरुदिषिषुः । इत्यादीनि ॥ ९ ॥

( प्र० ) **रुदविदेति** । रुदसाहचर्य्याद्वेत्तेरेव ग्रहणम् । रुदविदमुषाणां त्रयाणामिवर्णोपधादिति विकल्पेप्राप्ते ग्रहिस्वपिप्रच्छीनां तु सस्य कित्त्वाप्राप्तौ वचनम् । कित्त्वस्य फलं ग्रहामिति सम्प्रसारणम् । अत्र गुणाभावः सम्प्रसारणञ्च ॥ ९ ॥

विद ज्ञाने । विविदिषति ॥

( च० ) विद ज्ञाने । वेदितुमिच्छति । इच्छायां सप्रत्ययः । द्वित्वम् । 'सिसता०' षत्वम् विविदिषति । विविदिषांचकार । लुङ्लकारे । अविविदिषीत् ॥

मुष स्तेये । मुमुषिषति ॥

( च० ) मुष स्तेये । मोषितुमिच्छति । 'इच्छायाम्०' । साधनं पूर्ववत् । मुमुषिषति । मुमुषिषांचकार । अमुमुषिषीत् । अन्यानि सुगमानि ॥

ग्रह उपादाने । हो ढः । आदिजबानाम् । षढोः कः से । षत्वम् । क्षः । ग्रहीतुमिच्छति जिघृक्षति ॥

( च० ) ग्रह उपादाने । ग्रहीतुमिच्छति । 'इच्छायाम्०' । अनेन सप्रत्ययः । ततः 'ग्रहां क्ङिति च' ततो द्वित्वम् । 'रः' 'कुहोश्चुः' 'झपानाम्०' 'यः से' । 'हो ढः' । 'आदिजबानाम्०' । 'षढोः कः से' । षत्वम् । 'कषसंयोगे०' । जिघृक्षति । जिघृक्षांचकार । लुङ्लकारे । अजिघृक्षीत् अजिघृक्षिष्टाम् ॥

सुषुप्सति ॥

( च० ) ञिष्वप् शये । 'इच्छायाम्०' । सम्प्रसारणम् । ततो द्वित्वम् । षत्वम् । स्वप्तुमिच्छति । सुषुप्सति । लिट्लकारे । सुषुप्सांचकार । लुङ्लकारे । असुषुप्सीत् असुषुप्सिष्टाम् असुषुप्सिषुः ॥

**प्रच्छ ज्ञीप्सायाम् ॥ कॄगॄधॄदॄप्रच्छस्मिङ्ज्वशूङ्र्तीनां सस्येड् वक्तव्यः ॥१०॥** पिपृच्छिषति ॥

( च० ) प्रच्छ ज्ञीप्सायाम् । 'इच्छा' 'कॄगॄधॄदॄप्रच्छस्मिङ्' सम्प्रसारणम् । 'यः से' षत्वम् । पिपृच्छिषति । लिट्लकारे । पिपृच्छिषांचकार । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अपिपृच्छिषीत् । अन्यानि सुगमानि ॥ १० ॥

( प्र० ) कॄगॄध्रिति । अत्र वृङ् वृञ् ऋदन्तानामितीटो दीर्घो नेष्टो भाष्यकारेणानुक्तत्वात् ॥ १० ॥

करितुमिच्छति चिकरिषति ।

( च० ) कॄ विक्षेपे । करितुमिच्छति । 'इच्छायाम्०' । 'रः' 'गुणः' । इट् । षत्वम् । 'कुहोश्चुः' 'यः से' । चिकरिषति । चिकरिषांचकार । अचिकरिषीत् ॥

जिगरिषति । जिगलिषति ।

( च० ) गॄ निगरणे । गरितुमिच्छति । 'इच्छायाम्०' । द्वित्वम् । 'रः' । 'कुहोश्चुः' । 'यः सेः' । इट् । गुणः । षत्वम् । जिगरिषति । जिगरिषांचकार । 'यतः' । जिगरिष्यात् । 'सिसता०' । जिगरिषिता । अजिगरिषिष्यत् । लुङ्लकारे द्वाविटौ । सेर्लोपः । अजिगरिषीत् अजिगरिषिष्टाम् अजिगरिषिषुः । 'गिरतेः' अनेन रस्य लः । जिगलिषति ॥

दिदरिषति ।

( च० ) दॄ विदारणे । दरितुमिच्छति । 'इच्छायाम्०' । सः प्रत्ययः । धातोर्द्वित्वम् । 'रः' । 'यः से' । 'गुणः' । इट् । षत्वम् । दिदरिषति । दिदरिषाञ्चकार । 'यतः' । दिदरिष्यात् । सिसता०' दिदरिषिता । लुङ्लकारे । साधनं पूर्ववत् । अदिदरिषीत् । अन्यानि सुगमानि ॥

दिधरिषति ।

( च० ) धृ धारणे । धर्तुमिच्छति । 'इच्छायाम्०' । अन्यत्सर्वं पूर्ववत् । 'झपानाम्०' । अनेन धस्य दः । दिधरिषति । दिधरिषाञ्चकार । लुङ्लकारे । अदिधरिषीत ॥

सिस्मायिषति ।

( च० ) स्मिङ् ईषद्धसने । स्मयितुमिच्छति । 'सः' । द्वित्वम् । पूर्वस्य गुणः । सिस्मयिषति । सिस्मयिषांचकार । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'दिबादावट्' । असिस्मयिषीत् असिस्मयिषिष्टाम् असिस्मयिषिषुः । इत्यादीनि ।

स्वरादेः परः । अञ्जिजिषति ।

( च० ) अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अञ्जितुमिच्छति । 'इच्छायाम्०' । 'कॄ गॄ' अनेनेट् । पश्चात् । 'स्वरादेः परः' । जस्य द्वित्वम् । षत्वम् । अञ्जिजिषति । चतुर्णां सुगमानि । 'कासादि०' अञ्जिजिषांचकार । 'यतः' । अजिजिष्यात् । 'सिसता०' । अञ्जिजिषिता । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्यत्सुगमम् । 'स्वरादेः' । अनेन द्वितीयोऽडागमो भवति । 'सवर्णे' । आञ्जिजिषीत् । अन्यानि सुगमानि ॥

आशिशिषते ।

( च० ) अशूङ् व्याप्तौ । अशितुमिच्छति । इच्छायाम्०' । 'स्वरादेः परः' । अशिशिषति । 'कासादि०' अनेनाम् । अशिशिषाञ्चकार । 'यतः' । अशिशिष्यात् । 'सिसता०' । अशिशिषिता । अशिशिषिष्यति । 'स्वरादेः' । आशिशिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । आशिशिषीत् ॥

अरिरिषति ।

( च० ) अर्तुमिच्छति । 'इच्छायाम्' इट् 'स्वरादेः परः' ईरशब्दस्य द्वित्वम् । षत्वम् अरिरिषति । चतुर्णां सुगमानि । 'कासादि०' अनेनाम् अरिरिषांचकार । 'यतः' । अरिरिष्यात् । 'सिसता०' अरिरिषिष्यति । 'स्वरादेः' आरिरिषिष्यत् । लुङ्लकारे द्वाविटौ सेर्लोपः आरिरिषीत ॥

अद भक्षणे । 'सिसयोः०' इति घसादेशः । 'सस्तोऽनपि' । अत्तुमिच्छति जिघत्सति ॥

( च० ) अद भक्षणे । अत्तुमिच्छति । 'इच्छायाम्०' । अनेनास्य सप्रत्ययः । 'सिसयोः०' । अनेय घसादेशः । ततो द्वित्वम् । 'कुहोश्चुः' । 'झपानाम्०' । 'यः से' । 'सस्तोऽनपि । अनेन सकारस्य तकारः । जिघत्सति । लिट्लकारे । जिघत्सांचकार । 'यतः' । जिघत्स्यात् । 'सिसता०' । जिघत्सिता । जिघत्सिष्यति । अजिघत्सिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिघत्सीत अजिघत्सिष्टाम् अजिघत्सिषुः ॥

**हन्तीङोः सो णित्** ॥ हन्तीङोर्धात्वोः सो णिद्भवति ॥११॥ हन हिंसागत्योः । द्वित्वम् । पूर्वस्य । हसादिः शेषः । कुहोश्चुः । झपानां जबचपाः । यः से । हनो घ्ने । अत उपधायाः । नश्चापदान्ते झसे । स धातुः । अप् । अदे । हन्तुमिच्छति जिघांसति ॥

( च० ) हन हिंसागत्योः ॥ '**हन्तीङोः सो णित्**' । हन्तीङोः स णित् । हन्तो-

ङोर्धात्वोः स प्रत्ययो णित् भवति । णित्त्वात् वृद्धिः । अन्यत्साधनं मूले लिखितम् । हन्तुमिच्छति । लिट्लकारे । जिघांसांचकार । लुङ्लकारे । द्वाविटौ सेर्लोपः । अजिघांसीत् । इत्यादीनि ॥ ११ ॥

( प्र० ) हन्तीङोरिति । अत्र हनिङोः से दीर्घ इति केचित् पठन्ति ॥ ११ ॥

**इङः से गम् वाच्यः ॥ १२ ॥** अध्येतुमिच्छति अधिजिगांसते ॥

( च० ) इङ् अध्ययने । अध्येतुमिच्छति । 'इच्छायाम्०' । 'इङः०' इङो धातोः सप्रत्यये परे गम् वाच्यः । अन्यत्साधनं तु पूर्ववत् । अधिजिगांसते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । अधिजिगांसाँचक्रे । 'सिसता०' । अधिजिगांसिषीष्ट । अधिजिगांसिता । अधिजिगांसिष्यते । 'दिबादावट्' अध्यजिगांसिष्यत् । लुङ्लकारे । अध्यजिगांसिष्ट । इत्यादीनि ॥ १२ ॥

**गमेः से इड्वाच्यः ॥ १३ ॥** गन्तुमिच्छति जिगमिषति ॥

( च० ) गम्लृ । गन्तुमिच्छति । 'इच्छायाम्०' ॥ 'गमेः०' गमेर्धातोः सप्रत्यये इड् वाच्यः । अनेनास्येट् । द्वित्वादिकं तु पूर्ववत् कार्यम् । षत्वम् । जिगमिषति । लिट्लकारे । 'कासादि०' । जिगमिषाञ्चकार । 'यतः' । जिगमिष्यात् । 'सिसता०' । जिगमिषिता । जिगमिषिष्यते । अजिगमिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिगमिषीत् इत्यादीनि भवन्ति ॥ १३ ॥

**इस्से ॥** अपित्दाधारभ्लभ्शक्पद्पत्मिमीमामाङ्मेङ्हिंसार्थराधां स्वरस्य से परे इसादेशो भवति पूर्वस्य च लोपः ॥ १४ ॥ दित्सति ।

( च० ) दा दाने । दातुमिच्छति 'इच्छायाम्०' । अनेन सप्रत्ययः । धातोर्द्वित्वं च ॥ 'इस्से' इस् से । अपित् दा धा रभ् लभ् शक् पद् पत् मि मी मा माङ् मेङ् हिंसार्थराधां धातूनां स्वरस्य सप्रत्यये परे इसादेशो भवति । पूर्वस्य च लोपो भवति अनेनेस् । पूर्वस्य लोपः । 'सस्तोऽनपि' अनेन सस्य तः । दित्सति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । दित्साञ्चकार । 'यतः' । दित्स्यात् । 'सिसता०' । दित्सिता । दित्सिष्यति । अदित्सिष्यत् । अदित्सीत् । इत्यादीनि ॥ १४ ॥

धित्सति ।

( च० ) डुधाञ् धारणपोषणयोः । धातुमिच्छतीति । 'इच्छायाम्०' । 'इस्से' । 'धित्सति । धित्साञ्चकार । 'लुङ्लकारे । अधित्सीत् । अधित्सिष्टाम् । अधित्सिषुः ॥

स्कोराद्योश्च । खसे चपाः । रिप्सति ।

( च० ) रभ् राभस्ये । रब्धुमिच्छति । 'इच्छायाम्०' । 'इस्से' । 'खसे०' । 'स्कोराद्योश्च ।' रिप्सति । 'रिप्सांचकार । लुङ् । अरिप्सीत् ॥

लिप्सति ।

( च० ) डुलभष् प्राप्तौ । लब्धुमिच्छति । 'इच्छायाम्०' । द्वित्वम् । 'इस्से' । 'स्कोराद्योश्च' । 'खसे०' । लिप्सति । लिट्लकारे ॥ 'कासादि०' । लिप्सांचकार ।

'यतः' । लिप्स्यात् । 'सिसता०' । लिप्सिता । लुङ्लकारे । द्वाविटौ । अलिप्सीत् अलिप्सिष्टाम् अलिप्सिषुः । इत्यादीनि ।

शिक्षते ।

( च० ) शक्लृ शक्तौ । शक्तुमिच्छति । 'इच्छायाम्' । 'इस्से' । षत्वम् । 'कष-संयोगे क्षः' । शिक्षते । लिट्लकारे । शिक्षांचकार । 'यतः' । शिक्ष्यात् । 'सिसता०' शिक्षिता । लुङ्लकारे । साधनं सुगमम् । अशिक्षीत् । इत्यादीनि ॥

**पतो वेट् ॥** पित्सति पिपतिषति । इट्पक्षे इसपूर्वलोपौ न भवतः ॥१५॥

( च० ) पत्लृ पतने । पतितुमिच्छति । 'इच्छायाम्०' । 'इस्से' । पित्सति । पित्सांचकार । लुङ्लकारे । अपित्सीत् ॥ **'पतः०'** पत्लृ पतने इत्यस्य धातोर्वा इट् भवति । 'यः से' । अनेन पूर्वस्याकारस्येकारः । इट्पक्षे सपूर्वलोपौ न भवतः । पिप-तिषति । लिट्लकारे । पिपतिषांचकार लुङ्लकारे । साधनं पूर्ववत् अपिपतिषीत् ॥१५॥

पित्सते ।

( च० ) पद गतौ । पत्तुमिच्छति । 'इच्छायाम्०' । 'इस्से' । पित्सते । पित्सां-चक्रे । लुङ्लकारे । अपित्सिष्ट । इत्यादीनि ।

मीञ् हिंसायाम् । डुमिञ् प्रक्षेपे । मित्सति ।

( च० ) मीङ् हिंसायाम् । डुमिञ् प्रक्षेपे । अनयोर्धात्वोः सप्रत्यये कृते । 'इस्से' 'सस्तोऽनपि' अनेन सकारस्य तकारः । मित्सति । लिट्लकारे । मित्सांचकार । लुङ्लकारे साधनं सुगमम् । अमित्सिष्टाम् ।

माङ् माने । मेङ् शोधने । मित्सते ।

( च० ) माङ् माने । मेङ् शोधने । अनयोर्धात्वोः सप्रत्यये कृते । 'इस्से' । मित्स-ते । मित्सांचक्रे । 'सिसता०' । अनेनेट् । मित्सिषीष्ट । लुङ्लकारे । अमित्सिष्ट । इत्यादीनि ।

राध संसिद्धौ । रित्सति ॥

( च० ) राध संसिद्धौ । राद्धुमिच्छति । 'इच्छायाम्०' । 'इस्से' । अनेनेसपूर्व-लोपौ भवतः । 'स्कोराद्योश्च' । 'खसे' । रित्सति । चतुर्णां रूपाणि सुगमानि । लिट्ल-कारे । 'कासादि०' । अनेनाम् । रित्सांचकार । लुङ्लकारे । 'दिबादावट्' । अरित्सात् । इत्यादीनि ॥

**आप्नोतेरीः ॥** आप्नोतेराकारस्येकारो भवति से परे पूर्वस्य च लोपः ॥१६॥ आप्लृ व्याप्तौ । ईप्सते ॥

( च० ) आप्लृ व्याप्तौ । आप्तुमिच्छति । 'इच्छायाम्०' । 'स्वरादेः' ॥ 'आप्नोते-रीः' आप्नोतेः ईः । आप्नोतेर्धातोराकारस्य ईकारो भवति सप्रत्यये परे । पूर्वस्य च

लोपो भवति । ईप्सते । लिट्लकारे । 'कासादि०' ईप्सांचक्रे । लुङ्लकारे । 'दिबादावट्' । 'स्वरादेः परः' । 'अइए' । 'एऐऐ' । ऐप्सिष्ट । ऐप्सिषाताम् । ऐप्सिषत ॥१६॥

**अशेरनायो वा** ॥ अशेरिच्छायां संस्थाने वा अनायप्रत्ययो भवति ॥१७॥ अशनायति । अशिशिषति ॥

( च० ) अश भोजने । अशितुमिच्छति । 'इच्छायाम्०' ॥ 'अशेरनायो वा' अशेः अनायः वा अव्ययम् । अशेर्धातोरिच्छायां सकारस्य स्थाने वा अनायः प्रत्ययो भवति । तदा धातोर्द्वित्वं न भवति । अशनायति । अशनायांचकार । लुङ् । अशनायीत् । इत्यादीनि । यदा अनायः प्रत्ययो न भवति तदा इट् । 'स्वरादेः परः' । षत्वम् । अशिशिषति । लिट्लकारे । अशिशिषांचकार । लुङ्लकारे । 'स्वरादेः' । आशिशिषीत् । इत्यादीनि ॥ १७ ॥

**पततनदरिद्राभ्यः स वा इड्वाच्यः** ॥ १८ ॥ तितनिषति ॥ तितंसति ॥ **तनेः से वा दीर्घः** ॥१९॥ तितांसति ॥

( च० ) तनु विस्तारे । तनितुमिच्छति । 'इच्छायाम्०' । अनेन सप्रत्ययो धातोर्द्वित्वं च । 'सिसता०' । 'यः से' षत्वम् । तितनिषति । तितनिषांचकार । अतितनिषीत ॥ सूत्रम्—'पततनदरिद्राभ्यः०' ॥ पत तन दरिद्रा एभ्यो धातुभ्यः सप्रत्यये वा इड् वाच्यः । तदा । 'नश्चापदान्ते' । तितंसति । लिट्लकारे । तितंसांचकार । 'यतः' । तितंस्यात् । 'सिसता०' । तितंसिता । लुङ्लकारे । अतितंसीत् ॥ 'तनेः०' । तनेर्धातोः सप्रत्यये वा दीर्घो भवति । अनेन दीर्घः । तितांसति । तितांसांचकार । 'यतः' । तितांस्यात । लुङ्लकारे । अतितांसीत् । इत्यादीनि ॥ १८-१९ ॥

दिदरिद्रिषति दिदरिद्रासति ॥

( च० ) दरिद्रा दुर्गतौ । 'दरिद्रातुमिच्छति । 'इच्छायाम्०' । द्वित्वम् । 'यः से' । 'सिसता०' । णप् । अनेनाकारस्य लोपः । षत्वम् । 'दिदरिद्रिषति । 'पतः०' । अनेनास्येट्विकल्पः । दिदरिद्रासति । लिट्लकारे । 'कासादि०' । दिदरिद्रासांचकार । 'यतः' । दिदरिद्रास्यात् । 'सिसता०' । दिदरिद्रासिता । लुङ्लकारे । अदिदरिद्रासीत् । इत्यादीनि ॥

**वेडिस्से दीर्घता च** ॥ दम्भिज्ञप्योर्धात्वोर्वा इड् भवति सप्रत्यये परे ॥ यदा नेट् तदा किम् । अनयोर्दम्भिज्ञप्योर्धात्वोः सानुस्वारस्य स्वरस्य इस् भवति इकारस्य दीर्घता दम्भेरिकारस्य वा दीर्घता । चकारात्पूर्वस्य लोपः ॥ दम्भ दम्भने । आत्मनः दाम्भितुमिच्छति दिदम्भिषति । द्वित्वम् । इस् । आदिजबानाम् । खसे चपा झसानाम् । स्कोराद्योश्च वा दीर्घता । धीप्सति धिप्सति ॥ २० ॥

( च० ) दम्भ दम्भने । 'आत्मनो दम्भितुमिच्छति ॥ सूत्रम्—'वेडिस्से०' ॥

वा इट् इस् से दीर्घता च अव्ययम् । अस्य सूत्रस्य व्याख्यानं मूल एव कृतम् । साधने यानि सुत्राणि तानि मूले उक्तानि दीर्घता वा भवति । धीप्सति । धिप्सति । यदा इट् तदा दिदम्भिषति । अस्य साधनं तु सुगमम् । लिट्लकारे । दिदम्भिषांचकार । धीप्सांचकार । धिप्सांचकार । लुङ् । अदिदम्भिषीत् । अधीप्सीत् । अधिप्सीत् । इत्यादीनि रूपाणि सुगमानि ॥ २० ॥

ज्ञाऽवबोधने । इच्छायामात्मनः सः । द्विश्च ह्रस्वः । पूर्वस्य हसादिः शेषः । यः से । वा इट् । गुणः । ए अय् । स्वरहीनम् । षत्वम् । स धातुः । तिप् । अप् । अदे । आत्मनः ज्ञापयितुमिच्छतीति जिज्ञापयिषति । पक्षे । जिज्ञापि स इति स्थिते । सस्य इस् तस्य दीर्घता । पूर्वस्य लोपः । ञेः । स्कोराद्योश्च ज्ञीप्सति ।

( च० ) ज्ञा अवबोधने । आत्मनः ज्ञापयितुमिच्छति । अस्य ञ्यन्तात् सः । सूत्राणि मूले लिखितानि । जिज्ञापयिषति । लिट्लकारे । 'कासादि०' । 'जिज्ञापयिषांचकार । लुङ्लकारे । अजिज्ञापयिषीत् । यदा इङ् न भवति तदापि अस्य साधनं मूले उक्तम् । ज्ञीप्स्यति । लिट्लकारे । ज्ञीप्सांचकार । 'सिसता०' । ज्ञीप्सिता । लुङ् । अज्ञीप्सीत् ।

ज्ञप ज्ञानज्ञापनयोः । जिज्ञापयिषति । मितां ह्रस्वः । जिज्ञपयिषति ज्ञीप्सति ॥

इति सप्रक्रिया ॥ २८ ॥

( च० ) ज्ञप ज्ञानज्ञापनयोः । 'इच्छायाम्०' । 'ञ्यन्तानाम्०' । अन्यत्साधनं तु मूलतो ज्ञेयम् । जिज्ञपयिषति । लिट्लकारे । जिज्ञपयिषांचकार । लुङ् । अजिज्ञपयिषीत् । यदा इङ् न भवति तदा ज्ञीप्सति । लिट्लकारे । 'कासादि०' । ज्ञीप्सांचकार । लुङ् । अज्ञीप्सीत् अज्ञीप्सिष्टाम् अज्ञीप्सिषुः । इत्यादीनि रूपाणि भवन्ति । सुगमत्वात्सर्वाणि न लिखितानि ।

इति सप्रक्रिया समाप्ता ॥ २८ ॥

( प्र० ) (सान्तात्सो न स्वार्थसान्तात्तु स्यादेव) अत्र श्लोकवार्त्तिकम् । 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते' इति । शैषिकाच्छैषिकः सरूपः प्रत्ययो नेष्टः । शालीये भव इति वाक्यमेव । न तु ईयान्तात् पुनरीयः । सरूपः किम् । आहिच्छत्रे भवः आहिच्छत्रीयः । अण्णन्तादीयः । तथा मत्वर्थीयात् मतुबर्थिकः सरूपः प्रत्ययो न भवति । धनवानस्यास्ति । वत्वन्तान्न वतुः । विरूपस्तु स्यादेव । दण्डिमती शाला । सरूप इति अनुसम्बध्यते । सरूपः सादृश्यं तत्तु अर्थद्वारा । तेनेच्छासान्तादिच्छासो न भवति । स्वार्थसान्तात्तु स्यादेव । जुगुप्सिषते । 'अतिशये हसादेर्यङ् द्विश्च' इत्यतश्चकारानुवृत्तेरेतद्बोध्यम् ॥

इति प्रसादे सान्तप्रक्रिया ॥ २८ ॥

## यङ्प्रक्रिया ॥ २६ ॥

॥ अथ यङ्प्रक्रिया निरूप्यते ॥ **अतिशये हसादेर्यङ् द्विश्च** ॥ हसादेरेकस्वराद्धातोरतिशयेऽर्थे यङ् प्रत्ययो भवति तस्मिन्सति धातोर्द्वित्वम् ॥१॥ **यङि** ॥ यङि सति लुकि च पूर्वस्य नामिनो गुणो भवति ॥ २ ॥ स धातुः । ङित्त्वादात्मनेपदम् । अप् । अतिशयेन भवतीति । बोभूयते । बोभूयेत । बोभूयताम् । अबोभूयत । बोभूयांचक्रे । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । अबोभूयिष्यत । अबोभूयिष्ट ॥

( च० ) अथ यङ्प्रक्रिया कथ्यते । सूत्रम्—'अतिशये हसादेर्यङ् द्विश्च' ॥ अतिशये हसादेः हस् प्रत्याहार आदिर्यस्य स हसादिः तस्मात् हसादेः । यङ् च अव्ययम् । द्विः हस्प्रत्याहारादेर्धातोरतिशयेऽर्थे यङ्प्रत्ययो भवति । क्वचिदेकस्वराद्धातोरपि न दृश्यते । तेन जागृ चकासृ इत्यादिभ्यो नैकस्वरेभ्यो यङ्प्रत्ययो न भवति इति विग्रहे अत्र भूधातोरेकस्वरत्वात् हसादित्वात् यङ्प्रत्ययो भवति । ततो द्वित्वम् । ङकार आत्मनेपदार्थः । भू भू य इति ॥ 'यङो' । यङि सति लुकि च सति पूर्वस्य द्विरुक्तसंबन्धिनो नामिनो गुणो भवति । अनेन गुणः । 'झपानाम्०' । 'स धातुः' । अनेनास्मिन् प्रकरणे सर्वत्र धातुसंज्ञा कार्या । धातुत्वात तआदयः प्रत्यया भवन्ति । 'अप् कर्तरि' । 'अदे' । बोभूयते बोभूयेते बोभूयन्ते । इत्यादीनि । बोभूयेत बोभूयेताम् बोभूयेरन् । लोट् बोभूयताम् बाभूयेताम् बोभूयन्ताम् । अबोभूयत अबोभूयेताम् अबोभूयन्त । लिट् । 'कासादि०' । अनेन सूत्रेण सर्वत्राम्प्रत्ययो भवति । अन्यत्साधनं सुगमम् । बोभूयांचक्रे बोभूयांचक्राते बोभूयांचक्रिरे । 'सिसता०' । 'यतः' षत्वम् । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । 'दिबादावट्' । अबोभूयिष्यत । लुङ्लकारे । 'भूते सिः' । ईट् । षत्वम् । ष्टुत्वम् । अबोभूयिष्ट अबोभूयिषाताम् अबोभूयिषत । इत्यादीनि ॥ १–२ ॥

( प्र० ) अतिशय इति । अतिशयनमतिशयः । अतिशयो द्विविधः । पौनः पुन्यं भृशार्थश्च । स चार्थो यङो द्योत्य एव । धातुश्च यङन्त एव न तु यङः प्रकृतिभूतः । अटाट्यत इत्याद्यसिद्धेः । अत्र केचित्–कथं यङन्तादात, ङितो धातोराद् विधानात् । अत्र च यो ङित् स न धातुः यो धातुः स च न ङित् । किंच ङस्य गुणनिषेधादिप्रयोजकत्वेन चरितार्थत्वादात्मनेपदप्रयोकजत्वासम्भवः । अवयवे कृतं लिङ्गमचरितार्थं समुदायविशेषकं भवतीत्युक्तेः । अत्राभिधीयते । सधातुरित्यनेन यङन्तस्य धातुत्वेन धातोर्ङित्वसत्त्वात् । गुणनिषेधार्थं च ङकारप्रश्लेषस्य कर्त्तव्यत्वात् ।

वाभूयत इति। भवनानुकूल एकाभिन्नाश्रयको वर्त्तमानोऽतिशयविशिष्टो व्यापारः। १–२।

बोभुज्यते ॥ **अनपि च हसात्** ॥ हसादुत्तरस्य यङो लुग्भवति अनपि विषये ॥ ३ ॥ **धात्वंशलोपनिमित्ते आर्धधातुके परे**

**तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये ॥ ४ ॥** बोभुजांचक्रे ॥

( च० ) भुज पालनाभ्यवहारयोः । अतिशयेन भुनक्ति इति विग्रहे यङ् । द्वित्वम् । 'झपानाम्०' । यङि अनेनास्य पूर्वस्य गुणः । बोभुज्यते । बोभुज्येत । बोभुज्यताम् । गुणः । अबोभुज्यत । रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम् प्रत्ययः ॥ सूत्रम्—'अनपि च हसात्' ॥ अनपि च अव्ययम् । हसात् । हसादुत्तरस्य यङ्प्रत्ययस्य लुग् भवति अनपि विषये । अनेन यङो लुक् । अत्र गुणे प्राप्ते ॥ 'धात्वंश०' । धात्वंशलोपनिमित्ते आर्धधातुके परे सति तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये । अनेन गुणाभावः । बोभुजांचक्रे । 'सिसता०' । षत्वम् । बोभुजिषीष्ट । बोभुजिता । बोभुजिष्यते । 'दिबादावट्' । अबोभुजिष्यत । लुङ्लकारे । 'भूते सिः' । इट् । षत्वम् । ष्टुत्वम् । अबोभुजिष्ट अबोभुजिषाताम् अबोभुजिषत । इत्यादीनि ॥ ३-४ ॥

( प्र० ) हसादिति । हसात् किम् । लोलूयिता । योयूयिता । आदेः परस्य ॥ परस्य यद्विहितं तत्तस्यादेर्बोध्यमिति यूलोपः । यत इत्यलोपः । बोभूजांचक्रे ॥

अनपीति । हसात्परस्य यशब्दस्य लोपोऽनपि विषये । हसात् किम्, लोलूयिता । आदेः परस्य । परस्य यद्विहितं तत्तस्यादेर्बोध्यम्, इति य् लोपः । यत इत्यलोपः । बोभुजांचक्रे । बोभुजिषीष्ट । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः ॥ ३-४ ॥

**मुह वैचित्ये । मोमुह्यते ॥**

( च० ) मुह वैचित्ये । 'अतिशये०' । द्वित्वम् । 'गुणः' । 'स धातुः' । मोमुह्यते । चतुर्णां सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम् । 'अनपि च हसात्' अनेन यङो लोपः । मोमुहांचक्रे । 'सिसता०' । मोमुहिषीष्ट । मोमुहिता । मोमुहिष्यते । अमोमुहिष्यत । अमोमुहिष्ट । रूपाणि सुगमानि ॥

**लिह आस्वादने । लेलिह्यते ॥**

( च० ) लिह आस्वादने । 'अतिशये०' । अनेन यङ् । अतिशयेन लेढि । लेलिह्यते । लिट् । 'अनपि च हसात्' । लेलिहांचक्रे । 'सिसता०' लेलिहिषीष्ट । लुङ् । अलेलिहिष्ट । रूपाणि सुगमानि ॥

**हु दानादनयोः । जोहूयते ॥**

( च० ) हु दानादनयोः । अतिशयेन जुहोति । यङ् । द्वित्वम् । 'कुहोश्चुः' । 'गुणः' । जोहूयते । लिट् । जोहूयांचक्रे । 'सिसता०' । जोहूयिषीष्ट । लुङ् । अजोहूयिष्ट । रूपाणि सुगमानि ॥

**विद ज्ञाने । वेविद्यते ॥**

( च० ) विद ज्ञाने । अतिशयेन वेत्तीति । 'अतिशये०' । अनेन यङ् । अन्यत्साधनं तु पूर्ववत् । वेविद्यते । लिट् । वेविदांचक्रे । लुङ् । अवेविदिष्ट ॥

**आतः ॥** यङि लुकि च सति पूर्वस्य अकारस्य आकारो भवति अकिति । पापच्यते ॥ ५ ॥

( च० ) पच्लृ पचने । पठ व्यक्तायां वाचि । अनयोर्यङ् ॥ सूत्रम्—'आतः' ॥ आ अतः । यङि लुकि च पूर्वस्य अकारस्य अकारो भवति अयकि । पापच्यते । अपापचिष्ट ॥ ५ ॥

( प्र० ) आत इति । आ आ अत इति च्छेदः । द्वितीयाकारस्य वैयर्थ्यानुपपत्त्या किञ्चिदिष्टं ज्ञाप्यते, किं तदिष्टम्, अकित्पूर्वस्याकारस्याकार इति तेन नरीनृत्यत इति सिद्धम् ॥ ५ ॥

पठ व्यक्तायां वाचि । पापठ्यते ॥

( च० ) पापठ्यते । अपापठिष्ट । रूपाणि सुगमानि ॥

**सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतिभ्यो यङ् वाच्यः ॥ ६ ॥** सोसूच्यते ।

( च० ) सूत्रम्—'सूचिसूत्रि०' ॥ सूचि सूत्रि मूत्रि अटि अर्ति अश् ऊर्णोति एभ्यो धातुभ्यो यङ्प्रत्ययो वाच्यः । एषामप्राप्तत्वात्सूत्रमिदम् । साधनं तु सुगमम् । सोसूच्यते । लिट् । सोसूचांचक्रे । लुङ् । असोसूचिष्ट ॥ ६ ॥

सोसूत्र्यते ।

( च० ) सोसूत्र्यते । लिट् । सोसूत्रांचक्रे । लुङ् । असोसूत्रिष्ट ।

मोमूत्र्यते ॥

( च० ) मोमूत्र्यते । लिट् । 'कासादि०' । 'अनपि च हसात्' । मोमूत्रांचक्रे । अमोमूत्रिष्ट ।

गत्यर्थात्कौटिल्य एव यङ् । स्वरादेः परः । अट गतौ । यङ्सहितस्य द्वित्वम् । अटय टय इति स्थिते । पूर्वस्य हसादिः शेषः । आतः । इति पूर्वस्यात्वम् । कुटिलं अटतीति अटाट्यते । अटाटांचक्रे । अटाटिषीष्ट ॥

( च० ) अट गतौ । गत्यर्थाद्धातोः कौटिल्येऽर्थे यङ् । 'स्वरादेः परः' । यङ्सहितस्य द्वित्वम् । अटय टय इति स्थिते । 'पूर्वस्य०' । 'आतः' । कुटिलं अटति । अटाट्यते । लिट् । अटाटांचक्रे । लुङ् । अटाटिषीष्ट ।

व्रज गतौ । कुटिलं व्रजतीति वाव्रज्यते ॥

( च० ) कोपि व्रजति । यङ् । 'आतः' साधनं सुगमम् । वाव्रज्यते । लिट् । वाव्रजांचक्रे । लुङ् । अवाव्रजिष्ट ।

अश भोजने । अशाश्यते ॥

द्वौ वारौ जायतेऽसौ द्विजः। गृहैर्दारैः सह तिष्ठतीति गृहस्थः॥ गिरिशः। शीङ् स्वप्ने॥ पादैः पिबतीति पादपः॥ द्रु गतौ। शुचं द्रवतीति शूद्रः॥ **शुचः शूद्रे**॥ शुचः शूरादेशो भवति द्रे परे॥ २६॥

( च० ) सूत्रम्-'नाम्नि च'॥ नाम्नीति नामन् शब्दस्य सप्तम्येकवचनान्तम्। 'अल्लोपः स्वरे' 'स्वरहीनं०' च प्रथमैकवचनान्तम्। 'अव्यया०' नाम्नि नाममात्रे कर्मादिनियमरहिते प्रयुज्यमाने डप्रत्ययो भवति कर्तरि चकाराद्भावेऽपि। यथा। आखूनां मूषिकाणामुत्थानमाखूत्थम्। ष्ठा। 'आदेः ष्णः स्नः' उत्पूर्वः। 'उदः स्थादेः' इति सलोपः। 'खसे चपा०' आखुपूर्वः। 'सवर्णे दीर्घः' डप्रत्ययः। टिलोपः। 'स्वरहीनं०' 'अतोऽम्' इत्यादौ उदाहरणम्॥ पा पाने। पा द्विपूर्वः। द्वाभ्यां शुण्डामुखाभ्यां पिबतीति द्विपः। डप्रत्ययः। अत्र टिलोपः। 'स्वरहीनं०' 'स्रोर्विं०'॥ एवं द्विवारं द्वाभ्यां जन्मसंस्काराभ्याम् एकं जन्मतो द्वितीयं दीक्षासंस्काराच्च जायते उत्पद्यत इति द्विजः। जनी प्रादुर्भावे। जनेर्जा आदेशः। डप्रत्ययः। टिलोपः। 'स्वरहीनं०'। ष्ठा गतिनिवृत्तौ। ष्ठा। 'आदेः ष्णः स्नः' स्था षस्य सः। निमित्ताभावे० इति ठस्य थः। गृहपूर्वः। गृहे तिष्ठतीति गृहस्थः। डप्रत्ययः। टिलोपः 'स्वरहीनं०'॥ द्रु गतौ। शुच्पूर्वः। शुचं शोकं द्रवति प्राप्नोति हीनजातित्वादिति शूद्रः। डप्रत्ययः। अत्र टिलोपः। 'शुचः शूद्रे' शुच्शब्दस्य द्रे इति डप्रत्ययान्तद्रुधातौ परे शू इत्ययमादेशो भवति। अनेन शुचः शू॥ २५-२६॥

**उरसः सलोपो मुम्वा**॥ उरसः सकारस्य लोपो भवति डप्रत्ययान्ते गमौ मुमागमश्च वा॥२७॥ उरसा गच्छतीत्युरगः उरङ्गः सर्पः॥

( च० ) 'उरसः सलोपो मुम्वा'॥ उरस्शब्दस्य उपपदस्य गमिधातौ परे सकारस्य लोपो भवति वा विकल्पेन मुमागमो भवति। अनेन गम् उरस्पूर्वः। उरसा हृदयेन गच्छतीति उरगः उरङ्गो वा। 'नाम्नि च' इति डप्रत्ययः। अत्र टिलोपः। 'स्वरहीनं०' 'उरस०' इति सलोपः। एकत्र मुमागमः 'नश्चापदान्ते'॥ २७॥

**विहायसो विहश्च**॥ विहायस्शब्दस्य विहादेशो भवति चकारान्मुम्वा डान्ते गमौ॥२८॥ विहायसि आकाशे गच्छतीति विहगः-विहङ्गः॥ **भुजस्य च मुम्वा डप्रत्ययान्ते गमौ**॥ २९॥ भुजो वक्रार्थे॥ भुजं वक्रं गच्छतीति भुजगः भुजङ्गः। विहायसो विहश्चेति चकारात् तरसस्तुरादेशः। मुम्वेति अनुवर्तनीयम्। तरसस्तुरादेशः। तुरस्य मुम्वा डान्ते गमौ॥ तरसा वेगेन गच्छतीति तुरगः-तुरङ्गः॥

( च० ) एवं विहायसा आकाशेन विहायसि आकाशे वा गच्छतीति विहगः विहङ्गः। गम् विहायस्पूर्वः॥ 'विहायसो विहश्च' विहायस्शब्दस्य विहादेशः मुमागमः।

डप्रत्ययः ॥ चकारात् भुजं कुटिलं गच्छतीति । भुज कौटिल्ये । भुजगः भुजङ्गः । प्लवगः प्लवङ्गः । तुरगः तुरङ्गः । इत्याद्यपि ॥ २८-२९ ॥

**अटौ** ॥ नाम्नि कार्ये च उपपदे सति अटौ प्रत्ययौ भवतः ॥ ३० ॥ अस्थि हरतीति अस्थिहरः कः? श्वा । कवचं हरतीति कवचहरः कुमारः ॥ धृञ् धारणे । धनुर्धरतीति धनुर्धरः क्षत्रियो राजा वा ॥ चर गतौ । कुरुषु देशेषु चरतीति कुरुचरः । ट ईबर्थः । ष्ट्रिव्रतः स्त्री चेत् कुरुचरी । मह्हीचरी । सेनाचरी । भिक्षाचरी दीक्षाचरी ॥ अप्रत्ययः सर्वधातुसाधारणः । टप्रत्ययस्तु चरादेरेव भवति ॥ शोकं करोतीति शोककरी कन्या । यशः करोतीति यशस्करी विद्या ॥ सृ गतौ । पुरःसरतीति पुरः सरः । अग्रे सरतीति अग्रेसरः ॥ पार्श्वे शेतेऽसौ पार्श्वशयः । तथैव पृष्ठे शेतेऽसौ पृष्ठशयः । उदरशयः ॥ उत्तानादिषु कर्तृषु । उत्तानः शेतेऽसौ उत्तानशयः । स्तम्बेरमः हस्ती ॥ जप जल्प व्यक्तायां वाचि । कर्णेजपः ॥ ग्रह उपादाने । शक्तिं गृह्णातीति शक्तिग्रहः । लाङ्गलग्रहः । पृष्ठिग्रहः । अङ्कुशग्रहः । तोमरग्रहः । घटीग्रहः । धनुर्ग्रहः । सूत्रग्रहः । पुष्पग्रहः । फलग्रहः । कामग्रहः । मधुरग्रहः । शंपूर्वः कृञ् । शं सुखं वा कल्याणं करोतीति शङ्करः । शंवदः । भारवहः । अत्र कर्मणि अणपि वक्तव्यः । भारवाहः । श्वेतवाहः । इत्यादि ॥

( च० ) सूत्रम्—'अटौ' ॥ अश्च टश्च अटौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' नाम्नि कार्ये च वाच्यमाने अकारटकारप्रत्ययौ यथायोरयं भवतः टप्रत्यये । टकार ईबर्थः । पचिनन्दीति पचादीनां निरुपपदानामप्रत्यय उक्तः । अटावित्यत्र तु सोपपदानां अप्रत्यय इति न पौनरुक्त्यम् । उदाहरणम् । हृञ् हरणे । हृ अस्थिपूर्वः । अप्रत्ययः । 'गुणः' 'स्वरहीनं०' अस्थीनि हरतीति अस्थिहरः श्वा कुक्कुरः ॥ एवं कवचं संनाहं हरतीति कवचहरः कुमारः इन्द्रो वा ॥ धृ धनुष्पूर्वः । 'दोषां०' इति षस्यरः । 'राद्यपो द्विः' 'झबे जबाः' जलतुम्बिकान्यायेन० । धनुर्धरतीति धनुर्धरः कुमा रः इत्यादयोऽप्रत्ययान्ताः ॥ चर गतिभक्षणयोः । चर कुरुपूर्वः । कुरुषु देशेषु चरितीति कुरुचरः । स्त्रीचेत् कुरुचरी । टप्रत्ययः । अ 'स्वरहीनं०' एकत्र प्रथमैकवचने 'स्रोर्विं०' ॥ द्वितीये टित्त्वात् 'ष्ट्रिव्रतः' इतीप् । 'यस्य लोपः' प्रथमैकवचने 'हसेपः सेर्लोपः' नदीशब्दवत् ॥ ३० ॥

**इखखि** ॥ धातोर्नाम्नि कार्ये च सति इ ख खि एते प्रत्यया भवन्ति ॥ ३१ ॥

शकृत्स्तम्बात्कृञः फले रजोमलाद्ग्रहो हृञः ।
दृतिनाथाद्देववातादापः कर्तरि वाच्य इः ॥ ३ ॥

वत्सव्रीह्योरेव । डुकृञ् करणे । शकृत्करोतीति शकृत्करिः को वत्सः ॥

स्तम्बं करोतीति स्तम्बकरिः को व्रीहिः। फलं गृह्णातीति फलेग्रहिः वा फलानि गृह्णतीति फलेग्रहिर्वृक्षः। फलस्यैदन्तत्वं निपातनात्। रजो गृह्णातीति रजोग्रहिः। मलग्रहिः। दृतिं हरतीति दृतिहरिः। नाथहरिः। आप्लृ व्याप्तौ। देवान् आप्नोतीति देवापिः। वातं आप्नोतीति वातापिः।

( च० ) सूत्रम्—'इखखि' ॥ इश्च खश्च खिश्च इखखि प्रथमाबहुवचनान्तं सांकेतिकम्। यद्वा प्रथमैकवचनान्तं नपुंसके। धातोर्नाम्नि कार्ये च सति इ, ख, खि, एते त्रयः प्रत्यया भवन्ति यथायोग्यम्। उदाहरणम्। कृ स्तम्बपूर्वः। स्तम्बं करोतीति विग्रहे इप्रत्ययः। 'गुणः' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' स्तम्बकरिः व्रीहिः शालिः। एवं शकृत्करिर्वत्सः। आप्लृ व्याप्तौ। आप् देवपूर्वः। देवानाप्नोतीति देवापिः। इप्रत्ययः 'स्वरहीनं०' एवं वातापिः। फलग्रहिः। नाथहरिः ॥ ३१ ॥

खकारः 'खिति पदस्ये'ति सूत्रस्य विशेषणार्थः ॥ **खिति पदस्य** ॥ खिति प्रत्यये परे पूर्वपदस्याव्ययवर्जितस्य मुमागमो भवति ॥३२॥ तेन दोषामन्यमहः। आत्मानं दोषा मन्यते तद्दोषामन्यम् अहः ॥

करीषकूलसर्वाभ्रात्कषः प्रियवशाद्वदः।
ऋतिमेघभयात्कृञः क्षेममद्रप्रियात्तु वा ॥ ३ ॥

कष निष्कर्षे। करीषं कषतीति करीषंकषः। करीषं शुष्कगोमयमित्यमरः। कूलं कषतीति कूलंकषः। सर्वं कषतीति सर्वंकषः। अभ्रं कषतीति अभ्रंकषः। खकारो मुमागमार्थः ॥ वद व्यक्तायां वाचि। प्रियं वदतीति प्रियंवदः। वशंवदः ॥ ऋतिं करोतीति ऋतिंकरः। मेघंकरः। भयंकरः। विकल्पपक्षे 'कार्ये अण्'। क्षेमं करोतीति क्षेमंकरः क्षेमकारः। भद्रं करोतीति भद्रंकरः भद्रकारः। प्रियं करोतीति प्रियंकरः प्रियकारः ॥

आशिताच्च भुवो भावे करणे च तुराद्भुजात्।
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात् ॥ ४ ॥
गच्छतेः प्रत्ययः खः स्याद्भृञोधातोस्तु खिर्भवेत्।
आत्मन्कुक्ष्युदरेभ्यः स्युस्तथा वाचंयमादयः ॥ ५ ॥

आशितेन भूयते इति आशितम्भवम्। भावे नपुंसकता वाच्या। आशितो भवत्यनेनेति आशितम्भवः ओदनः ॥ तुरं गच्छतीति तुरङ्गमः। भुजङ्गमः। विहङ्गमः। सुतङ्गमः। उरङ्गमः। हृदयङ्गमः। जनङ्गमः। प्लवेन गच्छतीति प्लवङ्गमः ॥ डुभृञ् धारणपोषणयोः। आत्मानं विभ-

र्तीति आत्मंभरिः। कुक्षिंभरिः। उदरम्भरिः। लुप्तविभक्तेश्च पदान्तत्वं विज्ञेयम् ॥ अतः परं वाचंयमादीन् कथयति। वाचंयमादयो निपात्याः। वाचं यच्छतीति वाचंयमः। अत्र अकारो निपात्यते ॥ दृ विदारणे। पुरं दारयतीति पुरंदरः ॥ तप सन्तापे। द्विषं तापयतीति द्विषंतपः। सर्वं सहतेऽसौ सर्वंसहः। विश्वं बिभर्तीति विश्वंभरः ॥ भगं दारयतीति भगंदरः ॥ तॄ प्लवनतरणयोः। रथं तरतीति रथंतरः ॥ वृञ् वरणे। पतिं वृणोतीति वा वृणुते सा पतिंवरा ॥ जि जये। धनं जयतीति धनंजयः ॥ धृञ् धारणे। वसूनि वा वसु धरति वा धरतेऽसौ वसुन्धरा। शत्रुं सहतेऽसौ शत्रुं सहः। अरिं दाम्यतीति अरिंदमः। शत्रुंतपः। एते वाचंयमादयः ॥

( च ) सूत्रम्। 'खिति पदस्य' ख इत् यस्य स खित् तस्मिन् खिति। सप्तम्येकवचनान्तम्। 'स्वरहीनं०' पदस्येति षष्ठ्येकवचनान्तम्। 'ङस्य' खिति खकारेत्प्रत्यये परे पूर्वपदस्य मुमागमो भवति। उकार उच्चारणार्थः ॥ कृ क्षेमपूर्वः। क्षेमंकरातीति क्षेमंकरः। 'इखखि' इति खप्रत्ययः। अत्र खकारो मुमागमार्थः। 'खिति पदस्य' इति पूर्वपदस्य मुमागमः। 'मोऽनुस्वारः' 'गुणः' 'स्वरहीनं०' एवं प्रियं वदतीति प्रियंवदः। वशंवदः। कूलंकषः। अभ्रंलिहः। वाचंयमः। पुरंदरः। भयंकरः। परंतपः। सवसहः। विश्वंभरः। मितंवचः। विधुन्तुदः। सूर्यंपश्यः। ललाटंतपः। असूर्यंपश्या राजदारा इत्यादि ॥ डुभृञ्। भृ आत्मन्पूर्वः। आत्मानं बिभर्तीति आत्मंभरिः। खिप्रत्ययः। 'नाम्नो नो०' 'खिति पदस्य' 'मोऽनुस्वारः' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विसर्गः' एवम् उदरंभरिः। कुक्षिंभरिः इत्यादयोऽपि ज्ञेयाः ॥ ३१ ॥

**एजां खश्** ॥ एजृ कम्पने इत्यादीनां खश् प्रत्ययो भवति ॥३२॥ खकारो मुमागमार्थः। शकारः शिति चतुर्वत्कार्यार्थः। धातोः प्रेरणे इति ञिः प्रत्ययः। जनान् एजयतीति जनमेजयः ॥

ञ्यन्तैजेर्मन्यतेर्मुञ्जकूलास्यपुष्पतो धयेः।
नाडीमुष्टीशुनीपाणिकरस्तनारसनासिकात् ॥ ६ ॥

मनु अवबोधने। दिवादेर्यः। आत्मानं पण्डितं मन्यते स पण्डितमन्यः। धेट् पाने। मुञ्जं धयतीति मुञ्जंधयः। कूलंधयः। आस्यंधयः। पुष्पंधयः। ध्माधेटोस्तुरुयोपपदत्वं ज्ञेयम् ॥ ध्मा शब्दाग्निसंयोगयोः। नाडीं धयतीति नाडिंधयः। नाडिंधमः ॥ **खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः** ॥३४॥ मुष्टिंधयः। मुष्टिंधमः। शुनिंधयः। शुनिंधमः। पाणिंधयः। पाणि-

धमः । करंधयः । करंधमः । स्तनंधयः । स्तनंधमः । नासिकां धयतीति नासिकन्धयः । नासिकन्धमः ॥

ध्मा खारीवातघटीतो रुजवहौ तु कूलतः ।
अरुर्विधुतिलात्तुद् स्यादसूर्योग्राद्दशिस्तपिः ॥ ७ ॥
ललाटतो वहाभ्राल्लिह् मितमाननखात्पचिः ।
वातादजिरिराया मद् जहातिः शर्धतिस्तथा ॥ ८ ॥

खारीं धमतीति खारिंधमः । वातंधमः । घटिंधमः ॥ रुजो भङ्गे । वह प्रापणे । उत्पूर्वः । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहतीति कूलमुद्वहः ॥ अरुः । किम् ? । मर्मस्थानम् । अरुस्तुदतीति अरुंतुदः । विधुंतुदः । तिलंतुदः ॥ दशिर् प्रेक्षणे । न सूर्यं पश्यन्तीति असूर्यंपश्याः । के ? राजदाराः । उग्रंपश्यः । ललाटंतपः ॥ लिह आस्वादने । वहं लेढीति वहंलिहः । अभ्रंलिहः ॥ मितं पचतीति मितंपचः । प्रस्थंपचः । पानंपचः । नखंपचः ॥ अज गतौ क्षेपणे च । वातमजतीति वातमजः ॥ मदी गर्वप्लवनयोः । इरया माद्यतीति इरंमदः ॥ ओहाक् त्यागे । शर्ध जहतीति शर्धंजहा माषाः ॥ इति खश्प्रत्ययः ॥

( च० ) सूत्रम् । 'एजां खश्' एजां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वा०' खश् प्रथमैकवचनान्तम् । 'हसेपः सेर्लोपः' 'एजृ कम्पने' इत्यादीनां खश् प्रत्ययो भवति खकारो मुमागमार्थः । शकारश्चतुर्वत्कार्यार्थः । एजृ जनपूर्वः । जनं लोकमेजयति कम्पयतीति विग्रहे । 'धातोः प्रेरणे' ञिप्रत्ययः । 'स्वरहीनं०' ततः । 'एजां खश्' इति खश । अ । 'खिति पदस्य' इति पूर्वस्य मुम् । 'स्वरहीनं०' चतुर्वत्त्वात् 'अप् कर्तरि' 'गुणः' 'एअय्' 'स्वरहीनं०' 'अदे' इत्यकारलोपः । 'स्वरहीनं०' जनमेजयः ॥ मन ज्ञाने मन् पण्डितपूर्वः । आत्मानं पण्डितं मन्यते इति पण्डितंमन्यः । खश्प्रत्ययः । शित्वात् 'दिवादेर्यः' खित्वान्मुमागमः । 'स्वरहीनं०' ॥ एवं सुभगंमन्यः इत्यादि ॥ ३३–३४ ॥

( प्र० ) एजामिति ॥ बहुवचनमाद्यर्थम् ॥ ३३ ॥

**ख्युट् करणे** ॥ धातोः करणेऽर्थे ख्युट् प्रत्ययो भवति ॥ ३५ ॥ **अभूततद्भावे ॥ आढ्यसुभगस्थूलपलितनग्नांधप्रियेषु कृञः ख्युट् वाच्यः** ॥३६॥ अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यंकरणं द्यूतम् । सुभगंकरणम् ॥ स्थूलंकरणं किम्? । दधि ॥ पलितंकरणं किम् ? । शीतवस्तुसेवनम् । अनग्नः नग्नः क्रियते अनेनेति नग्नंकरणं द्यूतम् ॥ अ-

न्धकरणं किम् ? । सूर्यावलोकनमसकृत् । अप्रियः प्रियः क्रियते अनेनेति प्रियंकरणं मैत्रम् ॥ **दारावाहनोऽण् वक्तव्यः** ॥३७॥ तकारस्य च टः ॥ **घाटादेशो वक्तव्यः** ॥३८॥ उवम् । दारु आहन्तीति दारवाघाटः ॥ **चारौ वा** ॥३९॥ चारु आहन्तीति चारवाघाटः चारवाघातः ॥ **कर्माणि-सम्पूर्वाच्च** ॥४०॥ वर्णान् संहन्तीति वर्णसंघातः ॥ **जायापत्योष्टक्** ॥४१॥ जायापत्योरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति लक्षणवति कर्तरि ॥ जायां हन्तीति जायाघ्नः ना । पतिं हन्तीति पतिघ्नी स्त्री ॥ **अमनुष्य-कर्तृके च** ॥४२॥ जायाघ्नः तिलकालकः । कपाले भ्रमरः । पतिघ्नी पादरेखा ॥ **पाणिघताडघौ शिल्पिनि निपात्येते** ॥४३॥ **राजघ उपसंख्यानम्** ॥ ४४ ॥

( च० ) सूत्रम्—'ख्युट् करणे' ख्युट् प्रथमकवचनान्तम् । 'हसेपः सेर्लोपः' करणे सप्तम्येकवचनान्तम् । 'अ इ ए' । अकृतस्य निष्पादनं करणमुच्यते तस्मिन्नर्थे धातोः ख्युट्प्रत्ययो भवति । खकारो मुमागमार्थः । टकार ईवर्थः । कृ नग्नपूर्वः । आनग्नो नग्नः क्रियते अनेन इति विग्रहे ख्युट्प्रत्ययः । यु । 'खिति पदस्य' इति खित्त्वान्मुम् । 'समासप्रत्यययोः' इति विभक्तिलोपे मुमागमः । "युवोरनाकौ" इत्यनादेशः । 'स्वरहीनं०' 'ऋगौणो०' नपुंसकान्तम् । नग्नंकरणं द्यूतम् । एवम् अस्थूलः स्थूलः क्रियते अनेनेति स्थूलंकरणं दधि । कृ स्थूलपूर्वः ॥ ३९ ॥

( प्र० ) लक्षणवतीति ॥ मरणसूचकं पाणिरेखादिकं लक्षणं यस्यास्ति स लक्षणवान् तस्मिन् कर्त्तरि सति; इत्यर्थः ॥

**भजां विण्** ॥४५॥ भजसहवहां कर्तरि विण् प्रत्ययो भवति । णकारो वृद्ध्यर्थः ॥ **वेः** ॥ वेर्लोपो भवति ॥४६॥ भज सेवायाम् । अर्धं भजतीति अर्धभाक् । चोः कुः सुखभाक् । दुःखभाक् ॥ वह प्रापणे । भारं वहतीति भारवाट्-भारवाड् भारवाहौ भारवाहः । भारवाहम् भारवाहौ ॥ बाहो वा ॥ बाहो वाकारस्यौकारो भवति शसादौ स्वरे परे ॥ भारौहः भारौहा भारवाड्भ्याम् भारवाड्भिः । इत्यादि ॥ सह मर्षणे । हो ढः । वावसाने । सहादेः सादिः इति सूत्रेण त्वरायास्तुरादेशः । त्वरां शत्रूणां वेगं सहतेऽसौ तुरासाट् । साहेः षः सोऽढि । तुरासाहौ तुरासाहः ॥ **पृच्छतेर्विण्** ॥४७॥ तत्त्वं पृच्छतीति तत्त्वप्राट् । अम्बूनि वहतीति अम्बुवाट् । शसादौ तु अम्बूह ॥ **अन उः** ॥ अनकारादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे ॥४८॥ शालिवाट् शाल्यूहः ॥

(च० ) सूत्रम्—'भजां वि.'॥ भजां षष्ठीबहुवचनान्तम् । 'स्वर०' 'मोऽनुस्वारः' विण् प्रथमैकवचनान्तम् । 'हसेपः०' भजामिति । भजादीनां भज, वह, षह, शम्, इत्यादीनां धातूनां विण्प्रत्ययो भवति कर्त्तृक्तौ विषये । णकारो वृद्ध्यर्थः ॥ भज सेवायाम् । भज् । अर्धपूर्वः । अर्धं भजतीत्यर्धभाक् । विण्प्रत्ययः । वि । णित्त्वात् 'अत उपधायाः' इति वृद्धिः । अर्धभाज् वि इति स्थिते ॥ सूत्रम्—'वेः' ॥ षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्त्रोर्वि०' वेरिति विप्रत्ययस्य लोपो भवति । इत्यनेन विलोपः । प्रथमैकवचने 'चोः कुः' 'हसेपः सेर्लोपः' 'वावसाने' अर्धभाक् अर्धभाजौ अर्धभाजः इत्यादि । स्त्रीलिङ्गेऽप्येवम् । नपुंसके तु अर्धभाक् अर्धभाजी अर्धभाञ्जि इत्यादि ॥ ४९ ॥

वह भारपूर्वः । भारं वहतीति विग्रहे विण् प्रत्ययः । वृद्धिः । विलोपः । प्रथमैकवचने 'हो ढः' 'हसेपः सेर्लोपः' 'वावसाने' ढस्य डः । भारवाट् भारवाड् । मधुलिह्शब्दवत्प्रक्रिया । शसादौ स्वरे तु विशेषः ॥ 'वाहो वौ' शसादौ स्वरे । वाह इति विण्प्रत्ययान्तस्य वहधातोः शसादौ स्वरे परे वा इत्यक्षरस्य कृत्स्नस्य औकारो भवति वा इत्यस्य औ 'औ औ औ' भारोहः । भारोहा भारवाड्भ्यां 'हो ढः' 'झबे जबाः' 'स्वरहीनं०' भारवाड्भिरित्यादि । षह मर्षणे । 'आदेः ष्णः स्नः' सह विण्प्रत्ययः । वृद्धिः । वेर्लोपः । प्रथमैकवचने 'हो ढः' 'साहेः षः सो ढि' साहः षष्ठ्येकवचनान्तम् । षः प्रथमैकवचनान्तम् । सः षष्ठ्येकवचनान्तम् । ढि सप्तम्येकवचनान्तम् । सहधातोः सकारस्य षकारो भवति ढकारेपरे रसे पदान्ते च । अनेन सस्य षः । 'हसेपः से०' 'वावसाने' तुरां शत्रुवेगं सहते इति तुराषाट् इन्द्रः । तुराषाहौ तुरासाहः । भकारादौ सुपि च तुराषाड्भ्यां तुराषाड्भिः इत्यादिरूपाणि ज्ञेयानि ॥ अत्र केचित् तत्त्वं पृच्छतीति तत्त्वप्राट् इत्युदाहरणं पठन्ति । तदत्र न युज्यते । अग्रे क्विप्प्रत्ययाधिकारे साधितत्वात् इह तु भ्रमात् पठन्ति ॥ ४८ ॥

(प्र० ) भजामिति बहुवचनमाद्यर्थम् । अत आह भजसहवहामिति ॥ ४९ ॥

**शमेरपि विण् वक्तव्यः ॥ ४९ ॥ मो नो धातोः । शम दम उपशमने । प्रकर्षेण शाम्यतीति प्रशान् प्रशामौ प्रशामः ॥**

(च० ) शम उपशमे । शम् प्रपूर्वः । प्रकर्षेण शाम्यतीति प्रशान् । विण्प्रत्ययः । वृद्धिः । वेर्लोपः । प्रथमैकवचने । 'मो नो धातोः' धातोर्मकारस्य नकारो भवति रसे पदान्ते च । इति मस्य नः । 'हसेपः सेर्लोपः' प्रशान् प्रशामौ प्रशामः । प्रशान्भ्यां प्रशान्भिः ॥

**अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ॥ अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नाश्च्विप्रत्ययो भवति ॥५०॥ सम्पद्यकर्तरीति वक्तव्यम् ॥५१॥ तेन अगृहे गृहे भवतीति गृहेभवति । चकारश्च्वौ दीर्घः इति विशेषणार्थः । अथवा चकारः प्रत्ययभेदज्ञापनार्थः । वेः ॥**

(च० ) अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ॥ न प्राक् भूतमभूतं तस्य तेनैव स्वात्मना भवनं तद्भावः तस्मिन्नर्थे अतथाभावस्य तथाभावे सति कृ भू अस् इत्येतेषां त्रयाणां धातूनां मध्ये एकतरेण योगे नाम्नश्च्विप्रत्ययो भवति । चकारश्च 'च्वौ दीर्घ ई चास्य' इति सूत्रविशेषणार्थः ॥ ५० ॥

**च्वौ दीर्घ ई चास्य** ॥ च्वौ प्रत्यये परे अकारस्य ईकारादेशो भवति अन्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य ॥५२॥ अमिथुनं मिथुनं सम्पद्यमानं तथा करणं इति मिथुनीकरणम् । किम्? । पाणिग्रहणम् । च्व्यन्तत्वादव्ययम् अव्ययाद्विभक्तेर्लुक् । असहायः सम्पद्यमानस्तथा स्यात् इति सहायी स्यात् । अकृष्णः कृष्णः यथा सम्पद्यमानस्तथा करोतीति कृष्णीकरोति । हेतूकृतम् । अव्ययस्य न दीर्घत्वम् । अस्वस्ति स्वस्ति यथा सम्पद्यमानस्तथा स्यादिति स्वस्ति स्यात् । सम्पद्यकर्त्तरि किम् । अगृहे गृहे भवतीति गृहेभवति । अलुक् क्वचित् इति विभक्तेरलुक् ॥

( च० ) 'च्वौ दीर्घ ई चास्य' च्वौ परे सति अकारव्यतिरिक्तस्वराणां दीर्घः आकारस्य च । यद्वा अस्य अवर्णस्य ईकारो भवति । उदाहरणम् । कृ मिथुनपूर्वः । अमिथुनं मिथुनं क्रियते इति विग्रहे । 'भावे युट्' यु । 'अभूततद्भावे०' । अनेन मिथुनस्याग्रे च्विः । 'च्वौ दीर्घ ई चास्य' इति अकारस्य ईकारः । 'युवोरनाकौ' 'गुणः' 'स्वरहीनं०' 'वेर्लोपः' 'ऋर्नो णो०' भावत्वान्नपुंसकलिङ्गत्वम् कुलशब्दवत् । एवं मिथुनीकरोति मिथुनीभवति मिथुनीस्यात् । भू शुक्लपूर्वः । अशुक्लस्य शुक्लभवनं शुक्लीभावः । घञ् । 'घञ् भावे' अ । ञ्णित्वाद्वृद्धिः । 'औ आव्' 'स्वरहीनं०:' च्विः । अकारस्य ई । 'वेर्लोपः' अत्र भूयोत्र च्विः । 'स्रोर्वि०' अस् भुवि । विधिसंभावनयोः यात् । 'अप् कर्त्तरि' 'अदादेर्लुक्' 'नमसोऽस्य' इत्यलोपः । सहायपूर्वः । असहायः सहायः स्यादिति विग्रहे च्विप्रत्ययः ई चास्य । 'वेः' इति लोपः । सहायी स्यात् क्रियापदम् । अत्र असूयोगे च्विः । कृ हेतुपूर्वः । अहेतुर्हेतुतया कृतं हेतूकृतम् । 'क्तक्तवतू' तप्रत्ययः । च्विप्रत्ययः । 'च्वौ दीर्घः०' । इति दीर्घः । उकारस्य ऊकारः । नपुंसकान्तम् ॥ ९२ ॥

**च्वौ सलोपश्च** ॥ अरुस् मनस् महस् चेतस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे ॥५३॥ द्वौ नञौ प्रकृतार्थमनुसरतः । उत्सुकं मनो यस्यासौ उन्मनाः, न उन्मनाः, अनुन्मनाः, अनुन्मनाः उन्मनाः सम्पद्यमानस्तथा भाव इति उन्मनीभावः । विगतं मनो यस्याऽसौ विमनाः, न विमनाः अविमनाः, अविमना विमनाः सम्पद्यमानः तथा भाव इति विमनीभावः । न विद्यते मनो यस्यासौ अमनाः, न अमनाः अनमनाः अनमनाः अमनाः सम्पद्यमानस्तथा भाव इति अमनीभावः । तथा सुमनीभावः । सुचेतीभावः । महीकरोति । अरूकरोति । चक्षूकरोति ॥

( च० ) 'च्वौ सलोपश्च' च्विप्रत्यये परे अरुस्मनश्चक्षुश्चेतोरहोरजसां सकारस्य लोपो भवति । सलोपे कृते च पूर्वस्य दीर्घः । अकारस्य ईकारः । स्थिरस्य मनसः अमन-

स्त्वेन भवनममनोभावः । अरूकरोति । चक्षूकरोति । चेतीकरोति । विरहीकरोति । भू । अमनस्पूर्वः । 'घञ्भावे' अ । च्विप्रत्यये कृते । 'च्वौ सलोपश्च' इति सलोपे कृते अकारस्य ईकारः ॥ एवमपरिखा परिखा कृता । परिखीकृता । क्तप्रत्ययः । परिखापूर्वः च्विप्रत्ययः । 'ई चास्य' इति अवर्णस्य ईकारः । 'वेः' इति विलोपः ॥ ९३ ॥

**डाच् क्वचिद्दुःखाद्यः** ॥ अभूततद्भावेऽर्थे क्वचित् डाच् प्रत्ययो भवति ॥ ९४ ॥ अदुःखं दुःखं सम्पद्यते तत् करोतीति दुःखाकरोति । तथा भद्राकरोति ॥

( च० ) प्रथमैकवचने 'स्रोर्विसर्गः' क्वचित्प्रयोगान्तरे च्व्यर्थे नाम्नो डाच्प्रत्ययो भवति । डकारष्टिलोपार्थः । चकारः प्रत्ययभेदज्ञापनार्थः । अदुःखिनं दुःखिनं करोतीति दुःखाकरोति । इति सिद्धमेव । करोति दुःखिनपूर्वः । डाच् । टिलोपः । 'स्वरहीनं०' ॥ एवं सुखाकरोति । सपत्राकरोति । प्रियाकरोति । मुण्डने भद्राकरणम् ॥ ९४ ॥

**आतो मनिप्क्वनिब्वनिपः** ॥ प्रादौ नाम्नि च प्रयुज्यमाने आकारान्ताद्धातोर्मनिप् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति ॥ ९५ ॥ सुष्ठु ददातीति सुदामा । राजन्शब्दवद्रूपम् । खसे चपा झसानाम् । अश्वे तिष्ठतीति अश्वत्थामा ॥

( च० ) सूत्रम्—'आतो मनिब्वनिपः' ॥आतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' मनिप् च क्वनिप् च वनिप् च मनिप्क्वनिब्वनिपः । प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' आकारान्ताद्धातोः मनिप्, क्वनिप्, वनिप्, एते त्रयः प्रत्ययाः कर्तरि । पकारः पित्कार्यार्थः । इकार उच्चारणार्थः । क्वनिप् इत्यत्र ककारः कित्कार्यार्थः । डुदाञ् दाने । दा सुपूर्वः । सुष्ठु ददातीति सुदामा । मनिप्प्रत्ययः । सुदामन्शब्दात् प्रथमैकवचने । 'नोपधायाः' 'हसेपः सेः०' 'नाम्नो नो लोप०' राजन्शब्दवत्साधना ॥ ९५ ॥

**स्थामी** ॥ इश्च ईश्च ई । दासोमास्था ह्रस्व इकारो भवति ॥ ९६ ॥ दीर्घ ईकारो भवति तकारादौ किति हसे परे, न क्यपि क्विपि वा क्वनिप्प्रत्ययः । सुष्ठु पिबतीति सुपीवा । भूरि ददातीति भूरिदिवा । घृतं पिबतीति घृतपीवा । धनदिवा । मलसिवा । मार्गस्थिवा । धनधीवा । सुगीवा । दोषहीवा ॥ **क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते** ॥९७॥ सुष्ठु करोतीति सुकर्मा । सुष्ठु शृणोतीति सुशर्मा । अन प्राणने । अत्र क्विप् । प्राणितीति प्राण् प्राणौ प्राणः । हे प्राण् ॥ **अनः** ॥ पदान्ते वर्तमानस्यापि अनो नस्य णत्वं स्यात् ॥९८॥ अधौ इति विशेषणान्नलोपो न शङ्कनीयः । इण् गतौ । **ह्रस्वस्य पिति कृति तुक्** ॥ ह्रस्वस्य पिति कृति परे तुगागमो भवति ॥९९॥

प्रातरेतीति प्रातरित्वा ॥ **वनिपि अमस्याऽत्वं वाच्यम्** ॥६०॥ जनी प्रादुर्भावे। विजायतेऽसौ विजावा। केवलेभ्योऽपि वनिप्। ओणृ अपनयने। ओणतीति अवावा अवावानौ ॥ **ईपि वनो नस्य रो वाच्यः** ॥६१॥ नरण ईप्। ओणति। सा अवावरी। पारं पश्यतीति पारदृश्वा पारं पश्यतीति सा पारदृश्वरी। केवलेभ्योऽपि क्वनिप्। षुञ् अभिषवे। षूङ् प्राणिगर्भविमोचने। सुनोतीति सुत्वा। तुक् ॥ धेट् पाने। धयतीति धीवा ॥ गै शब्दे। गायतीति गीवा। जहातीति हीवा। पीवा ॥

( च० ) सूत्रम्—'**स्थामी**' ॥ स्थां षष्ठीबहुवचनान्तम्। 'आतो धातोर्लोपः' 'स्वरहीनं०' 'मोऽनुस्वारः' ई प्रथमैकवचनान्तम् सांकेतिकम्। अथवा स्थां षष्ठीबहुवचनान्तम्। इ प्रथमैकवचनान्तम् ई प्रथमैकवचनान्तम् त्रिपदम्। 'अव्ययाद्वि०' इश्च ईश्च ई। स्था, पा पाने, गा, मा, हा, इत्यादीनामीकारो भवति किप्रत्ययव्यतिरिक्ते कृति परे स्थादीनामाकारस्य इकारः ईकारश्च भवति। क्वचित्प्रयोगानुसारेण ह्रस्व इकारः। यथा स्थितं सहितं मितं प्रमितम्। दो अवखण्डने। दितम्। षोऽन्तकर्मणि। अवसितम्। छो छेदने। छितम्। निशितमित्यादि। क्वचिद्दीर्घः। पा पाने। पा सुपूर्वः। सुष्ठु पिबतीति विग्रहे। 'आतो मनिप्०' इत्यादिना क्वनिप्प्रत्ययः। कित्त्वादाकारस्य ईकारः। पा इत्यस्य पी सुपीवन्। प्रथमैकवचने 'नोपधायाः' 'हसेपः सेर्लोपः' 'नाम्नो नो०' सुपीवा इति क्वनिबन्तम्। डुदाञ्। दा भूरिपूर्वः। भूरि प्रचुरं स्वर्णं वा ददातीति भूरिदावा वनिप् कित्त्वाभावात् 'स्थामी' इतीकारो न। राजन्शब्दप्रक्रिया ५६–६१

( प्र० ) **स्थामिति** ॥ एषामित्त्वं स्यात्तादौ किति ॥ ९६ ॥

'विश्वदृश्वनयना वयम्' इत्यत्र विश्वं पश्यन्तीति विश्वदृश्वानि नयनानि येषां ते विश्वदृश्वनयना इति वर्त्तमानेन विग्रहेऽपि न क्षतिः ॥

**क्विप्** ॥ उपपदे सति असति च सर्वधातुभ्यः क्विप् प्रत्ययो भवति ॥६२॥ क्विपः सर्वापहारित्वाल्लोपः। कपावितौ ॥ वेः ॥

( च० ) सूत्रम्। '**क्विप्**' प्रथमैकवचनान्तम्। 'हसेपः०' एकपदम्। सर्वधातुभ्यः क्विप्प्रत्ययो भवति। ककारो गुणप्रतिषेधार्थः तुग्विधानार्थश्च। अन्ये तु प्रत्यया उदाहरणानुसारेण यथायोग्यं धातुभ्यः प्रयोज्याः। क्विप्प्रत्ययस्तु सर्वधातुभ्यो भवतीत्यर्थः। कृ। कर्मन्पूर्वः। कर्म करोतीति विग्रहे क्विप्प्रत्ययः ॥ ६२ ॥

ह्रस्वस्य पिति कृति तुक् ॥ कर्म करोतीति कर्मकृत्। अग्निं चिनोतीति अग्निचित्। देवान् स्तौतीति देवस्तुत्। सोमं पिबतीति सोमपाः ॥ सर्वं पश्यतीति सर्वदृक्। दिशाम् इति कुत्वम्। दिश अतिसर्जने। दिशतीति दिक् क्विप् ॥ **वचिप्रच्छ्यायतस्तुकटप्रुज्ज्वश्रीणां दीर्घः सम्प्र-**

**सारणाभावश्च वक्तव्यः ॥६३॥** वक्ष्यनया सा वाक् वा उच्यते अनया सा वाक् ॥ प्रच्छ ज्ञीप्सायाम् । तत्त्वं पृच्छतीति तत्त्वप्राट् । छश-षराजादेः षः ॥ **छ्वोः शउ वाचणो क्विति ङिति झसे परेऽनुनासिके कौ च ॥६४॥** तेन तत्त्वप्राच्छौ(शौ) तत्त्वप्राच्छः(शः) ॥ ष्टुञ् स्तुतौ । आयतं स्तौतीति आयतस्तूः ॥ प्रुङ् गतौ । कट प्रवतेऽसौ कटप्रूः ॥ जु गतौ । जवतेसौ जूः । सुष्ठु श्रयतीति सुश्रीः । वा सुष्ठु श्रीर्यस्यासौ सुश्रीः । श्रयन्ते जना यामिति श्रीः ॥

( च० ) सूत्रम्—'ह्रस्वस्य पिति कृति तुक्' ॥ ह्रस्वस्य षष्ठ्येकवचनान्तम् । 'ह्रस्वस्य' पिति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' तुक् प्रथमैकवचनान्तम् । 'हसेपः सेर्लो०' पिति कृति परे ह्रस्वस्य स्वरस्य तुगागमो भवति । अनेन धातोः पुरस्तुगागमः । क्विपः सर्वापहारी लोपः इति क्विप्लोपः । प्रथमैकवचने 'हसेपः सेर्लोपः' कर्मन्नित्यत्र 'नाम्नो नो०' कर्मकृत् । एवमग्निं चिनोतीत्यग्निचित् । चिञ् चयने ॥ देवान् स्तौतीति देवस्तुत् । ष्टुञ् स्तुतौ । ष्टु । 'आदेः ष्णः स्नः' 'निमित्ताभावे०' इति टस्य तः । देवपूर्वः । क्विप्प्रत्ययः । तुगागमः । क्विपः सर्वापहारी लोपः ॥ पा पाने । सोमपूर्वः । क्विप्प्रत्ययः । सोमं पिबतीति सोमपाः । अत्र दीर्घत्वान्न तुगागमः । प्रथमैकवचने 'स्रोर्वि०' ॥ दृशिर् प्रेक्षणे । सर्वपूर्वः सर्वं पश्यतीति सर्वदृक् । क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः । 'दिशाम्' इति शस्य कः । प्रथमैकवचने । 'हसेपः से०' सर्वदृक् सर्वदृशौ इत्यादि ॥ श्रिञ्धातुः सेवायाम् । श्रिः सुपूर्वः । सुष्ठु श्रयतीति विग्रहे क्विप् ॥ 'वचिप्रच्छ्याय०' इति । प्रच्छ, वच, स्तु, कटप्रु, जु, श्रोणां दीर्घता भवति चकारात् प्रच्छः संप्रसारणाभावः । इति स्वरस्य दीर्घः । क्विब्लोपः । सुश्रीशब्दात्प्रथमैकवचने । 'स्रोर्वि०' ॥ प्रच्छ तत्त्वपूर्वः । क्विप्प्रत्ययः । 'प्रच्छादे० ।' इति दीर्घः । 'संयोगान्तस्य लोपः' 'छशषराजादेः षः' 'षो डः' 'हसेपः से०' 'वावसाने' तत्त्वं पृच्छतीति तत्त्वप्राट् तत्त्वप्राड् तत्वप्राच्छौ (शौ) तत्वप्राच्छः (शः) ॥ ६३-६४ ॥

**नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विबन्तेषु पूर्वपदस्योपसर्गस्यान्ते दीर्घो वाच्यः ॥६५॥** णह बन्धने । आदेः ष्णः स्नः । नहो धः । उप समीपे नह्यतीति उदानत् ॥ नितरां वर्ततेऽसौ नीवृत् ॥ व्यध ताडने । ग्रहां क्ङिति च । मर्माणि विध्यतीति मर्मावित् ॥ वृष वृष्टौ । प्रकर्षेण वर्षतीति प्रावृट् ॥ रुच दीप्तौ । नितरां रोचतेऽसौ नीरुक् ॥

( च० ) णह बन्धने । नह उपपूर्वः । उपनह्यते पादयोरित्युपानत् । क्विप् प्रत्ययः । क्विपि परे नहेर्धातोः पूर्वस्य उपसर्गस्य दीर्घता च वक्तव्या । क्विप्परे इति पाठे क्विप् परो यस्मात् स क्विप्परः ईदृशे नहिधातौ परे उपसर्गस्य दीर्घता वक्तव्या । प्रथमैकवचने 'नहो धः' हस्य धः । 'वावसाने' उपानत् उपानद् उपानहौ इत्यादि हसान्तस्त्रीलिङ्गे ॥

चकारात् प्रावृट् । प्रवर्षतीति प्रावृट् । मर्माविद् । नीरुक् इत्यादावपि दीर्घता ॥ नहेरि-त्युपलक्षणात् नहि वृषि वृति व्यधि सहि तनयः गृह्यन्ते ॥ ६५ ॥

**गम्यम्नम्हन्तनादीनां क्विपि अमस्य लोपो वाच्यः क्यपि वा ॥ ६६ ॥** तुक् । परितः तनोतीति परितत् ॥ कटं चिकीर्ष-तीति कटचिकीः । चिकीर्षतेः क्विप् । यतः इत्यकारलोपः । दोषाम् इति षस्य रेफः । रिलोपो दीर्घश्च इति मध्यमरेफस्य लोपः नतु संयोगान्तस्य लोपः । रसे पदान्ते चेति चकाराद् ॥ रात्सस्य । स्रोर्विसर्गः । कटचिकीर्षौ कटचिकी-र्षः ॥ वह प्रापणे । यजां यवराणाम् । अनो वहतीति अनड्वान् ॥ **क्विब-न्ते वह्यनसो डान्तादेशो वाच्यः ॥ ६७ ॥** अनड्वाहौ अनड्वा-हः ॥ राजृ दीप्तौ । मो राजि समः क्वौ । सम्यक् राजतेऽसौ सम्राट् ॥ ध्यै चिन्तायाम् ॥ **ध्यायतेः क्विपि सम्प्रसारणं दीर्घता च वक्तव्या ॥ ६८ ॥** सुष्ठु ध्यायतीति सुधीः ॥ **द्युतिगमिजुहोतीनां क्विपि क्वचित् द्वित्वं वाच्यम् ॥ ६९ ॥** हसादिः शेषाभावः ॥ **द्योततेः क्वचित्पूर्वस्य क्विपि सम्प्रसारणं वाच्यम् ॥ ७० ॥** द्योतते-ऽसौ दिद्युत् । गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति जगत् ॥ जुहोतेर्दी-र्घश्च । जुहोत्यनया सा जुहूः ॥

( च० ) कृ कटपूर्वः । कटं चिकीर्षतीति विग्रहे । 'इच्छायां०' इति सप्रत्ययः । 'से दीर्घः' 'ऋत इर्' किर् । द्वित्वम् । 'पूर्वस्य' 'हसादिः शेषः' रलोपः । 'कुहोश्चुः' चिकिर् । 'र्वोर्विहसे' इति दीर्घः । 'क्विलात्षः सः०' कटं चिकीर्ष अग्रे क्विप् । 'यतः' इति सप्रत्ययस्य अकारस्य लोपः क्विपः सर्वापहारी लोपः । 'दोषां रः' 'रिलोपो दीर्घश्च 'स्रोर्वि०' एवं साधयन्ति ॥ ध्यैचिन्तायाम् । ध्यै सुपूर्वः । सुष्ठु ध्यायति इति सुधीः क्विप्प्रत्ययः। ध्यायतेः ध्यै चिन्तायामित्यस्य धातोः क्विपि परे संप्रसारणं भवति दीर्घस्य(?) दीर्घ ईकारः । ध्यै इत्यस्य धी । क्विप्लोपः । प्रथमैकवचने 'स्रोर्वि०' सुश्रीशब्दवत् ।

**दृशेष्टक्सकौ चोपमाने कार्ये ॥ ७१ ॥** दृशेर्धातोः सर्वादिषु टक्सकौ प्रत्ययौ भवत उपमाने कार्ये सति ॥ चकारात् क्विप् वक्तव्यः ॥ **आ सर्वादेः ॥** एतेषु प्रत्ययेषु परेषु सर्वादेः पूर्वस्य टेरात्वं भवति ॥७२॥ दृशिर् प्रेक्षणे । अन्य इव दृश्यतेऽसौ अन्यादृशः । छशषराजादेः षः । षढोः कः से । क्विलात् । अन्यादृक्षः अन्यादृक् । स इव दृश्यतेऽसौ तादृशः-तादृक् । य इव दृश्यतेऽसौ यादृक्षः यादृक् । एष इव दृश्यतेऽसौ एतादृशः-एतादृक्षः एतादृक् ॥

( च ) सूत्रम्—'**दृशेष्टक्सकौ चापमाने कार्ये**' ॥ दृशेरिति दृशिशब्दस्य पञ्च-म्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' टक् च सक् च टक्सकौ प्रथमाद्विवचनान्तम् । 'स्वरहीनं०' पश्चात् 'विसर्जनीयस्य सः' 'ष्टुभिः ष्टुः' च प्रथमैकवचनान्तम् । 'अव्यया०' उपमाने सप्तम्येकवचनान्तम् 'अ इ ए' । कार्ये सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । दृशेर्धातोः टक्सकौ प्रत्ययौ भवतः । चकारात् तृतीयरूपे क्विप्प्रत्ययो भवति कार्ये कर्मोक्तौ उपमाने वाच्ये सति । दृश् अन्यपूर्वः । अन्य इव दृश्यत ति विग्रहे एकत्र टक् प्रत्ययः । टकारानुबन्धः 'ष्ठिवतः' इति कार्यार्थः ककारो गुणनिषेधार्थः ॥ सूत्रम्—'**आ सर्वादेः**' ॥ आ प्रथमैकवचनान्तम् सांकेतिकम् । सर्वादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' एतेषु टक् सक् क्विप् सप्रत्ययेषु परेषु सर्वादेः सर्वादिगणस्य पूर्वपदस्य टेरात्वं भवति । 'स्व-रही०' प्रथमैकवचने 'स्रोर्वि०' अन्यादृशः । द्वितीये सक्प्रत्ययः । टेरात्वम् । 'दिशाम्' इति शस्य कः । 'किलात्पः सः०' 'कषसंयोगे क्षः' प्रथमैकवचने । 'स्रोर्विसर्गः' अन्या-दृक्षः । तृतीयरूपे क्विप्प्रत्ययः । टेरात्वम् । क्विप्लोपः । प्रथमैकवचने 'दिशाम्' 'हसेपः सेर्लोपः' अन्यादृक् । टित्त्वादीप् । अन्यादृशी ॥ एवं स इव दृश्यते इति तादृशः तादृक्षः तादृक् । तद्पूर्वः । 'आ सर्वादेः' ॥ ७१-७२ ॥

( प्र० ) **आसर्वादेरिति** ॥ एवं चोपमाने कर्म्मोपपदनिमित्तकटक्सक्क्विप् एपु परेषु सर्वादेष्टेरात्वं नान्यत्रेत्यर्थः । तेन सर्वं पश्यतीति सर्वदृगित्यत्र न उपमानाभावात् ॥७२॥

**किमिदमः कीश्** ॥ किम्शब्दस्य इदमशब्दस्य च कीश् ईश् इत्येतावादेशौ भवतः टगादिषु प्रत्ययेषु परेषु ॥७३॥ शकारः सर्वादेशार्थः । क इव दृश्यतेऽसौ कीदृशः कीदृक्षः-कीदृक् । अयमिव दृश्यतेऽसौ ईदृशः-ईदृक्षः-ईदृक् । ईदृशी वार्ता । सर्वादित्वाट्टेरात्वम् ॥ **भवदादिषु दृशेष्ट-कारादयः पूर्वस्य टेर्दीर्घता च वक्तव्या** ॥७४॥ भवानिव दृश्य-तेऽसौ भवादृशः-भवादृक्षः-भवादृक् । चकारात् एतेषु प्रत्ययेषु परेषु समानश-ब्दस्य सो वाच्यः । समान इव दृश्यतेऽसौ सदृशः—सदृक्षः-सदृक् ॥ **अद-सोऽमू आदेशः** ॥ अदस्शब्दस्य टगादिषु सत्सु अमू आदेशो भवति किति परे ॥७५॥ असाविव दृश्यतेऽसौ अमूदृशः-अमूदृक्षः-अमूदृक्-ग् ॥ **प्रत्ययोत्तरपदयोः परतो युष्मदस्मदोरेकत्वे त्वत् मत् इत्ये-तावादेशौ भवतः** ॥ ७६ ॥ त्वमिव दृश्यतेऽसौ त्वादृशः-त्वादृक्षः-त्वा-दृक्-ग् । अहमिव दृश्यतेऽसौ मादृशः-मादृक्षः-मादृक्—ग् । यूयमिव दृश्यतेऽसौ युष्मादृशः-युष्मादृक्षः-युष्मादृक् । वयमिव दृश्यतेऽसौ अस्मादृशः-अस्मादृक्षः-अस्मादृक् । टकारानुबन्धत्वादीप् । तादृशी । यादृशी । एतादृशी । त्वादृशी । मादृशी । अन्यादृशी । युष्मादृशी । अस्मादृशी । भवादृशी इत्यादि ॥

( च० ) सूत्रम्—'कमिदमः कीश्' ॥ किं च इदं च किमिदम् तस्य षष्ठ्येकवचनान्तम् । 'स्रोर्वि०' । की च ई च की कीपूर्वः शः शकारोऽनुबन्धः उभयत्रापि युज्यते । कीश् प्रथमैकवचनान्तम् । 'हसेपः से०' ॥ केचित्तु 'किमिदमः कीशीश' एवं सूत्रं पठन्ति। एतेषु प्रत्ययेषु परेषु धातोः पूर्वयोः किम् इदम् शब्दयोः कीश् इश् इत्येतावादेशौ भवतः यथासंख्येन । किम् शब्दस्य कीश् । इदम् शब्दस्य ईश् शकारः सर्वादेशार्थः । दृश् किम्-पूर्वः । क्रमेण टक्सक्क्विप्प्रत्ययाः । क इव दृश्यत इति विग्रहे किमः की आदेशः । कीदृशः कीदृक्षः कीदृक् । शेषं प्राग्वत् ॥ एवम् इदम् पूर्वः । इदमः ई आदेशः । अयमिव दृश्यते ईदृक्षः ईदृक् ॥ ७३ ॥

भवदादिषु प्राक्पदेषु सत्सु इवार्थे उपमानार्थे दृशेर्धातोः टक्सक्क्विप्प्रत्यया भवन्ति । पूर्वपदस्य टेरात्वं भवतीत्यर्थः । भवानिव दृश्यते भवादृशः । भवादृक्षः । भवादृक् । अहमिव दृश्यते इति मादृशः मादृक्षः मादृक् । दृश् अस्मत्पूर्वः । 'त्वन्मदेकत्वे' इति महादेशे सौ कृते पश्चाट्टेराकारः । एवं त्वमिव दृश्यत इति त्वादृशः त्वादृक्षः त्वादृक् चकारात् समान इत्यस्य स आदेशः । समान इव दृश्यत इति सदृशः सदृक्षः सदृक् । वयमिव दृश्यत इत्यस्मादृशः अस्मादृक्षः अस्मादृक् । यूयमिव दृश्यत इति युष्मादृशः ॥ ७४ ॥

**णिनिरतीते** ॥ धातोरतीते काले शीलेऽर्थे च णिनिप्रत्ययो भवति ॥ ७७ ॥ **करणे उपपदे यजेर्णिनिर्वाच्यः** ॥ ७८ ॥ इनां शौ सौ । अग्निष्टोमेन इयाज इति वा अग्निष्टोमेन अयाक्षीत इति अग्निष्टोमयाजी । वा अग्निष्टोमं यष्टुं शीलं यस्य सः अग्निष्टोमयाजी । अश्राद्धं भुङ्क्ते इत्येवंशीलः अश्राद्धभोजी । अर्धं भुङ्क्ते इत्येवंशीलः वा भुक्तवान् इति उष्णं भुङ्क्ते इत्येवंशीलः वा भुक्तवान् इति उष्णभोजी ॥ हनो घत् ॥ **हन्तेर्निन्दायां णिनिर्वाच्यः** ॥ ७९ ॥ पितरं जघान वा अवधीत् इत्येवंशीलः पितृघाती । दण्डिन् शब्दवद्रूपं ज्ञेयम् ॥ **कर्त्तर्युपमाने णिनिर्वाच्यः** ॥ ८० ॥ अभ्र इव पततीति अभ्रपाती । मत्त इव करोतीति मत्तकारी । हंस इव गच्छतीति हंसगामी । स्त्री चेत् हंसगामिनी ईप् ॥

( च० ) सूत्रम्—'णिनिरतीते' ॥ णिनिः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । अतीते सप्तम्येकवचनान्तम् । 'अ इ ए' पश्चात् 'नामिनोरः' 'स्वरहीनं०' । धातोरतीते गतकाले णिनिप्रत्ययो भवति । शीले स्वभावेऽर्थे । णिनिरित्यत्र णकारो वृद्ध्यर्थः । इकारः प्रत्ययभेदज्ञापनार्थः ॥ उदाहरणम् । यज् अग्निष्टोममिष्टवान् यष्टुं शीलमस्येति वा अग्निष्टोमयाजी। णिनिप्रत्ययः इन् । णित्त्वाद्वृद्धिः । 'स्वरहीनं' 'इनां शौ सौ' 'हसेपः से०' 'नाम्नो नो०' दण्डिन् शब्दवत्प्रक्रिया ॥ ७७ ॥

( प्र० ) अग्निष्टोमेनेति । नन्वग्निष्टोमस्य कर्म्मनामधेयत्वेनाभेदात् कथं करणत्वमस्येति चेत्, सत्यम्, अभ्यासोऽपि फलोत्पादनायां करणं सम्भवतीत्यकारे समाहितत्वादग्निष्टोमः फलभावनायां करणं भवत्येव ।

**क्विप्क्वनिब्डाः ॥** धातोरतीते काले शीलेऽर्थे च क्विप् क्वनिप् डा इत्येते प्रत्यया इव भवन्ति ॥८१॥ **क्विप् ॥** वृत्र ब्रह्म भ्रूण एतत्पूर्वकादेव हन्तेः क्विप् स्यात् ॥८२॥ अतीते काले एव । वृत्र हतवानिति वृत्रहा । ब्रह्महा । भ्रूणहा । अन्यत्र शत्रुघातीत्यत्र णिनिः । शत्रुं हन्तीत्येवंशीलः शत्रुघाती । सुष्ठु करोति स्माऽसौ सुकृत् । कर्मकृत् । पापकृत् । पुण्यकृत् । शास्त्रकृत् । सोमं सुनोति स्माऽसौ सोमसुत् । अग्निं चिनोति स्माऽसौ अग्निचित् । इत्येते क्विबन्ताः ॥ क्वनिप् । युधि संप्रहारे । राजानं युध्यते स्माऽसौ राजयुध्वा । राजानं करोतीत्येवंशीलः राजकृत्वा । सह युध्यते स्माऽसौ सहयुध्वा सहकृत्वा ॥ षुञ् प्राणिप्रसवे । क्वनिब् तुक् । किंत्वाद्गुणाभावः । सुनोति स्माऽसौ वा सुत्वान् इति सुत्वा । स्तुत्वा । यजति यज्वा । पारमद्राक्षीत् इति पारदृश्वा । इत्येते क्वनिबन्ताः ॥

( च० ) सूत्रम्—'क्विब्क्वनिब्डाः' ॥ प्रथमाबहुवचनान्तम् । 'सवर्णे०' । 'स्रोर्वि०' । वृत्तिः सुगमा । हन् हिंसागत्योः । हन् वृत्रासुरं हतवानिति विग्रहे क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः । प्रथमैकवचने 'इनां शौ सौ' 'हसेपः से' 'नाम्नो नो०' वृत्रहा वृत्रहणौ । एवं ब्रह्महा । पूर्वं क्विप्प्रत्यो वनिप्प्रत्ययश्च वर्तमानकाले उक्तः । अत्र तु अतीते काले इति न पौनरुक्त्यमित्यादि । यज् वनिप्प्रत्ययः । वन् । 'स्वर०' यज्वन् प्रथमैकवचने 'नोपधायाः' 'हसेपः से०' 'नाम्नो नो०' इष्टवानिति यज्वा । यज्वानौ ॥८१॥

जनी प्रादुर्भावे ॥ **सप्तम्यां जनेर्डः ॥** सप्तम्यां जनेर्धातोर्डः प्रत्ययो भवति अतीते काले ॥८३॥ सरसि जायते तत् सरसिजं पद्मम् । अलुक् क्वचित् । सरसि जातं सरोजम् । संस्कारजः । अजः । द्विजः ॥ परितः खाता इति परिखा । प्रकर्षेण जायते स्मेति प्रजा । सर्वं गतवान् इति सर्वगः वा सर्वं गच्छति स्माऽसौ सर्वगः ॥ गै शब्दे । साम गीतवान् गायति स्माऽसौ सामगः ॥ इति डप्रत्ययान्ताः ॥ इति कर्त्रर्थप्रक्रिया ॥ १ ॥

( च० ) जनी प्रादुर्भावे । जन् सरसिपूर्वः । डप्रत्ययः । अ । डित्वाट्टिलोपः । 'स्वरहीनं०' सरसि जातं सरसिजम् । 'अलुक् क्वचित्' इति सप्तम्या अलुक् । नपुंसके कुलशब्दवत् । ज्ञाअवबोधने । ज्ञा सर्वपूर्वः । डप्रत्ययः । टिलोपः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' सर्वं ज्ञातवानिति सर्वज्ञः ॥ गम्लृ गतौ गम् सामन्पूर्वः । सामवेदं गतवान् ज्ञातवान् । गीतवानिति विग्रहे ये गत्यर्थास्ते ज्ञानार्था इति डप्रत्ययः टिलोपः 'स्वरहीनं०' 'नाम्नो नो०' सामगः । एवं सर्वत्र गतवान् सर्वगः ॥

## निष्ठाधिकारप्रक्रिया ॥२॥

अथ निष्ठाधिकारप्रक्रिया ॥ **क्तक्तवतू** ॥ धातोरतीते काले क्तक्तवतू प्रत्ययौ भवतः ॥८४॥ भावकार्ययोः क्तः । क्तवतुः कर्तर्येव ॥ कृतो घटः । कृतवान् घटम् । उकावितौ । उतुमर्थः ॥ ष्णा शौचे । स्नायते स्म तत् स्नातं त्वया । आगम्यते स्म तत् आगतम् । स्थीयते स्म तत् स्थितं देवदत्तेन । भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भावे नपुंसकता ॥

अन्तः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे ।
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥ ८ ॥

क्रियते स्माऽसौ कृतः कटस्तेन । स कटं कृतवान् । करोति स्माऽसा कृतवान् । कृष्णः सर्वं कृतवान् । ञितो नुम् नुमागमः ॥

( च० ) अथ निष्ठाप्रक्रिया ॥ सूत्रम्—'क्तक्तवतू' ॥ क्तश्च क्तवतुश्च क्तक्तवतू प्रथमाद्विवचनान्तम् । 'औ यू' 'सवर्णे०' ॥ धातोरतीते क्त क्तवतु इत्येतौ प्रत्ययौ भवतः । तत्र क्तप्रत्ययो भावे कर्मणि च भवति, क्तवतुश्च कर्तरि । ककारो गुणप्रतिषेधार्थः । अकारि इति कृतः । कृ क्त त्ययः । त । प्रथमैकवचने 'स्तोर्वि०' कृतः घटः कारुकेण । अत्र कर्मणि क्तः ॥ कृ । क्तवतुः । उकारो नुम्विधानार्थः तवत् प्रथमैकवचने । 'ञितो नुम्' अत्वसोः सौ दीर्घः' 'हसेपः सेर्लोपः' 'संयोगान्तस्य लोपः' ॥ चकार इति, कृतवान् । 'कृङितः' । स्त्रीचेत् कृतवती । अत्र कर्तरि क्तवतुः ॥ ८४ ॥

**गत्यर्थादकर्मकाच्च कर्तरि क्तः** ॥ गत्यर्थादकर्मकाच्च कर्तरि क्तप्रत्ययो भवति ॥ ८५ ॥ चाद्भावकर्मणोरपि ॥ लोपस्त्वनुदात्ततनाम् । गच्छति स्म इति गतः ॥ स्थामी । तिष्ठति स्म इति स्थितः । कृतः । अटति स्म इति अटितः ॥ शम दम उपशमे ॥ **अमान्तस्य क्ङिति झसे दीर्घः** ॥ अमान्तस्य धातोर्दीर्घो भवति क्ङिति झसे परे क्विपि वा ॥८६॥ शाम्यति स्म इति शान्तः । दाम्यति स्म इति दान्तः ॥ टुवम् उद्गिरणे । वमति स्म इति वान्तः ॥

( च० ) सूत्रम्—'गत्यर्थादकर्मकाच्च कर्तरि क्तः' ॥ गतिरर्थो यस्य सः गत्यर्थः तस्मात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे दीर्घः०' न विद्यते कर्म यस्येत्यकर्मकस्तस्मात् । पञ्चम्येकवचनान्तम् । 'ङसिरत्' मध्ये । 'चपा अबे०' 'स्वरहीनं' च प्रथमैकवचनान्तम् । 'अव्यया०' पश्चात् 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं' कर्तरीति कर्तृशब्दस्य सप्तम्येकवचनान्तम् । 'सोर्वि०' ॥ गम् क्तः । त । 'लोपस्त्वनुदात्ततनाम्' इति मलोपः । देवदत्तेन आगतमत्र भावे क्तः । नपुंसकलिङ्गे भावे विहितस्य क्तप्रत्ययस्य नपुंसकलिङ्गता

च ॥ ष्ठा 'आदेः ष्णः स्नः' स्था क्तप्रत्ययः । 'स्थामी' इति ह्रस्व इकारः । देवदत्तेन स्थितम् ॥ गत्यर्थो धातुः 'अट गतौ' इत्यादिः । अकर्मकश्च लज्जासत्तादिः । एवं द्विविधादपि धातोः कर्त्तरि क्तप्रत्ययो भवति । उदाहरणम् । अट् क्तप्रत्ययः । 'कृतः' इतीडागमः । अटितशब्दात् प्रथमैकवचने 'स्रोर्विः' अत्र गत्यर्थत्वात् क्तप्रत्ययः ॥ ष्ठा स्था क्तः । 'स्थामी' इति इकारः । स्थितः । अत्र अकर्मकत्वात् क्तः ॥ शम् दम् उपशमे । शम् क्तप्रत्ययः । 'शमां दीर्घः' 'नश्चापदान्ते०' शान्तः । एवं दम् धातोः दान्तः ॥ टुवम् । वान्तः । अकर्मकत्वात्कर्तरि क्तः ॥ मदेर्न दीर्घता, तेन मत्तः इति रूपम् ॥ ८५-८६ ॥

( प्र० ) गत्यर्थादिति । एभ्यो भावकर्म्मकर्त्तृषु क्तः प्रत्ययः स्यात् ॥

**यस्य क्वचिद्विकल्पेनेट् तस्य निष्ठायां नेड् वाच्यः ॥८७॥** गुप्तः गुप्तवान् ॥ **श्लिष्शीङ्स्थाआस्श्रिवस्जनरुहजीर्यतीनां सोपसर्गत्वेन सकर्मकाणामपि कर्तरि क्तो वाच्यः ॥ ८८ ॥** रमामाश्लिष्यति स्मेति आश्लिष्टः हरिः । हरी रमामाश्लिष्टः ॥ शेषमधिशिश्ये इति अधिशयितः । कोऽसौ विष्णुः । शेषमधिशयितो विष्णुः । स्वर्गमधितष्ठावित्यधिष्ठितः । स्वर्गमधिष्ठितः ॥ अधिशीङ्स्थासां कर्म ॥ उपासांचक्रे इति उपासितः भक्तो हरिम् । भक्तो हरिमुपासितः ॥ आश्रयति स्म इति आश्रितः ॥ एकादशीमुपोवास इति उपोषितः वा हरिदिनमुपोवास इति उपोषितः ॥ **वसिक्षुधोरिट्** ॥ आभ्यां नित्यमिट् स्यात् ॥८९॥ घसादेः षः ॥ राममनुजज्ञे इति अनुजातोऽच्युतः तमनुजातः ॥ वृषमारुरोह इति आरूढः शिवः ॥ जॄष् वयोहानौ । 'ऋत इर्' । 'य्वोर्वि हसे' जगत् अनुजजार इति अनुजीर्णोऽच्युतः । जगदजीर्णो वासुदेवः ॥ रः ॥ रेफादुत्तरस्थक्तस्य नो भवति । णत्वम् ॥९०॥ पक्षे तेन रमाश्लिष्टा हरिणा इत्यादि ज्ञेयम्॥

( च० ) 'वसिक्षुधोरिट्' इति । यद्यपि वसिक्षुधौ एतौ द्वौ धातू अनुदात्तौ अनिटौ कथितौ तथापि तयोरिडागमः । वस निवासे । क्तप्रत्ययः । संप्रसारणम् । 'वसिक्षुधोरिट्' इतीडागमः । 'घसादेः षः' । अवात्सीदीति उषितः ॥ एवं क्षुध् बुभुक्षायाम् । क्षुधितः । ञिष्वप् शये । 'आदेः ष्णः स्नः' स्वप् क्तप्रत्ययः । संप्रसारणम् । सुप्तम् ॥८९॥

( प्र० ) आश्लिष्ट इति । सकर्म्मकत्वादप्राप्तौ वचनम् ।

**क्तो वा सेट्** ॥ उकारोपधान्मृषश्च परः सेट् क्तः प्रत्ययः किद्वा भवति ॥९१॥ दिद्युते तत् द्युतितम् । द्योतते स्म तत् द्योतितम् । प्रकर्षेण दिद्युते स्माऽसौ प्रद्युतितः । प्रकर्षेण द्युतं प्राप्तः वा प्रद्योतते स्माऽसौ प्रद्योतितः ॥ मृष क्षान्तौ संपूर्वः । सम्यक् ममृषे तत् संमृषितं-संमर्षितम् ॥ उभयं

प्राप्तः उद्यते स्माऽसौ उदितः । रोदनं प्राप्तः रोदितः वा रोदिति स्माऽसौ रोदितः रुदितः ॥ मुष्यते स्माऽसौ मोषितः—मुषितः ॥ ग्रहां क्ङिति च । गृह्यते स्माऽसौ गृहीतः ॥ नुद्यते स्म इति नोदितः- नुदितः । वेदितः विदितः ॥ **शीङ्स्विदिमिदिक्ष्विदिधृषुपूङः क्षमार्थे** ॥ एभ्यः परौ सेटौ क्तक्तवतू प्रत्ययौ कितौ न भवतः ॥९२॥ **पूङो वा क्तः सेट्**॥ **पूङः** परस्य क्तप्रत्ययस्येड्वा भवति ॥९३॥ पूङ् शोधने । पुपुवेऽसौ पवितः पूतः ॥ शिश्येऽसौ शयितः ॥

( च० )सूत्रम्—'क्तो वा सेट्' ॥ क्तः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' 'हवे' 'उ ओ' सेट् । सह इटा वर्तमानः सेट् प्रथमैक-वचनान्तम् । 'हसेपः सेर्लोपः' ॥ इट्सहितः क्तप्रत्ययो भवति कित्त्वे सत्यपि विकल्पेन कित्त्वं कल्पनीयम् । कित्त्वाद्गुणप्रतिषेधः । यत्र कित्त्वं न तत्र गुणो भवति । द्युत् दीप्तौ । द्युत् प्रपूर्वः । कर्तरि क्तः । 'कृतः ' इतीडागमः । एकत्र कित्त्वाभावः तत्र गुणः । 'उपधाया लघोः' कित्त्वपक्षे गुणाभावः । प्रद्योतितः प्रद्युतितः ॥ रुदिर् अश्रुविमोचने । रुद् रोदितः रुदितः॥ मुष स्तेये । मोषितः । मुषितः । एवं नोदितः । नुदितः वेदितः विदितः ॥ ग्रह । 'क्तक्तवतू' इति क्तप्रत्ययः । 'ग्रहां क्ङिति च' इति संप्रसारणम् । 'कृतः' इतीडागमः । 'ईटो ग्रहाम्' इति इकारस्य ईकारः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' गृहीतः ॥ ९१–९२ ॥

**वृतः** ॥ उवर्णान्तात् ऋवर्णान्तात् श्विश्रियश्च धातोः परस्य कित प्रत्ययस्य वसादेः इट् न भवति ॥ ९४ ॥ बभूवेत्यसौ वा भवति स्म इति भूतः ॥ णु स्तुतौ नौति स्म इति नुतः ॥ वृञ् वरणे । ववार इति वृतः ॥ श्रयते स्म इति श्रितः ॥ **श्वयतेः सम्प्रसारणस्य दीर्घः** ॥ ९५ ॥ आशिश्वियदिति शूनः ॥

( च० ) सूत्रम्—'वृतः' ॥ षष्ठ्येकवचनान्तम् । एकपदम् । 'वुः से' इति सूत्रात् वुरित्यनुवर्तते । क्वापि 'वृश्रिञ् कितः' इति सूत्रं दृश्यते । उवर्णान्तात् ऋवर्णान्तात् श्रिञ् सेवायाम् इत्यस्माच्च धातोः परस्य कितः ककारेतः प्रत्यस्य इडागमो न भवति । 'भू गत्यर्थादकर्मका०' इति क्तप्रत्ययः । प्रथमैकवचने 'स्रोर्वि०' ॥ वृञ् वरणे । क्तप्र-त्ययः । 'प्रथमैकवचने 'स्रोर्वि०' ॥ श्रिञ् सेवायाम् । श्रि क्तप्रत्ययः ॥ अभावि इति भूतः । अवारि व्रियते सा इति वृतः । अश्रायि इति श्रितः । अत्र रूपत्रयेऽपि उवर्णा-न्तात् श्रिञश्च धातोरिति वचनात् 'कृतः' इति सूत्रेण प्राप्तस्य इटो निषेधः । एवम् नुतः स्मृतः ॥ ९४–९६ ॥

(प्र०) वृत ति । क्वचित् कित इति । तत्र वुः सेरित्यतो वुरित्यस्यानुवृत्तेर्वृ इत्यस्य लाभः ॥ ९४ ॥

**आदीदितः** ॥ आदितः इदितश्च परस्य क्तस्येट् न भवति ॥९६॥ **ञीतां तक् (क्त) वर्तमानेऽपि** ॥ ञीतां धातूनां मतिबुद्धिपूजार्थानां च वर्तमानेऽपि तक् (क्त) प्रत्ययो भवति॥ ९७ ॥ अपिशब्दात् भावकर्मणोरपि ॥ **दस्तस्य नो दश्च** ॥ दकारादुत्तरस्य कितस्तस्य नत्वं भवति॥९८॥ चकाराद्दकारस्य नकारो भवति ॥ ञिमिदा स्नेहे ॥ **आदितः कर्मणि निष्ठा कर्तरि च वाच्या** ॥९९॥ मिद्यते तत् भिन्नं । भिन्नमन्नं तैलेन वर्तते ॥ **भावे कर्तरि चादितः क्तस्येट् वा वाच्यः** ॥१००॥ **मिदेर्गुणः** ॥१०१॥ मेद्यतेऽसौ मेदितः । मिद्यते तत् मेदितम् । ह्लाद आह्लादने ॥ **निष्ठायां ह्रस्वो वाच्यः** ॥१०२॥ ह्लादतेऽसौ ह्लन्नः ॥ ञिष्विदा गात्रप्रक्षरणे ह्लादने च । आयासने प्रस्विद्यतेऽसौ प्रस्विन्नः । प्रस्वेदितः । स्वेदितं तेन ॥ ञिक्ष्विदा संचूर्णने । क्ष्विद्यतेऽसौ क्ष्विण्णः । क्ष्विद्यते तत् क्ष्वेदितं तेन ॥ ञिधृषा प्रागल्भ्ये । स्वादिषु । धृष्णोतीति धर्षितः-धृष्टः ॥ मन्यतेऽसौ मतः ॥ बुध अवगमने । बुध्यतीति बुद्धः ॥ पूज अर्चायाम् । पूजतीति पूजितः सः । ञीतां तक् वर्तमानेऽपि इत्यपिशब्दात् ज्ञार्चेच्छार्थशीलादेस्तक् । ज्ञा अवबोधने । अर्च पूजायाम् । इषु इच्छायाम् । शील स्वभावे । एतेषां तक् भवति ॥ ज्ञातः । अर्चितः । इष्यतेऽसौ एषितः । शील्यतेऽसौ शीलितः ॥ **क्तस्य च वर्तमाने** ॥ वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् ॥१०३॥ तेन राज्ञां पूजितः । पूज पूजने । अन्यत्र कार्ये क्तः सामान्यः ॥ दस्तस्य नो दश्चेति चकारान्मदेर्नेति वाच्यम् । तेन माद्यतीति मत्तः । मदी हर्षे ॥

(च०)सूत्रम्—'आदीदितः' ॥ आच्च ईच्च आदीतौ तौ इतौ यस्य स आदीदित् तस्मात् पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' आकारानुबन्धादीकारानुबन्धाच्च धातोः परस्य कितः प्रत्ययस्य इडागमो न भवति ॥ 'ञीतां तक्' ञि इत येषां ते ञीतस्तेषां धातूनां वर्तमानकालेऽर्थे अपिशब्दादतीतेऽप्यर्थे तक् (क्त) प्रत्ययो भवति । ञिमिदाधातुः स्नेहने म्रक्षणे । ञिकार आत्मनेपदार्थः । मिद् त इति स्थिते ॥ सूत्रम्—'**दस्तस्य नो दश्च**' ॥ दः पञ्चम्येकवचनान्तम् । 'स्रोर्वि०' । दः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ॥ च प्रथमैकवचनान्तम् । 'अव्यया०' ॥ दकारान्ताद्धातोः परस्य कितेस्तकारस्य नकारो भवति धातुसम्बन्धिनो दकारस्यापि नकारः । इति तक्संबन्धिनस्तस्य नः, दस्य च नः । 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' नपुंसकान्तम् । अन्नै

तैलेन भिन्नं स्निग्धं वर्तते इत्युदाहरणम्॥ एवं ञिष्विदाधातुः गात्रप्रक्षरणे प्रस्वेदने। ष्विद्। 'आदेः ष्णः स्नः' स्विद् ञ्यनुबन्धवत्वात्क्त। 'आदीदितः' इति आकारानुबन्धत्वादिण्निषेधः। 'दस्तस्य नो०' इति दकारतकारयोर्नकारः॥ प्रपूर्वः। आयासेन खेदेन प्रस्विन्नः॥ ञिष्विदा॥ ञिक्ष्विदा॥ क्षुदिर् संचूर्णने। संचूर्णनं पेषणं। क्षुद् तक् प्रत्ययः। दकारतकारयोर्नकारः। 'ष्रूर्नोणोऽनन्ते' 'अवकुप्वन्तरेऽपि' इति धातोर्नस्य णत्वे 'ष्टुभिः ष्टुः' इत्युत्तरनकारस्य णकारः। 'स्वरहीनं०' क्षुण्णः। चूर्णित इत्यर्थः॥ मदी हर्षे। इत्यस्य तु दकारतकारयोर्नकारो न तेन मत्त इति रूपम्॥ ९६-१०३॥

(प्र०) आदिदीति आच्च ईच्च आदीतौ इतौ यस्य तथा तस्मात्। कृत इति प्राप्तस्यापवादः॥ ९६॥

ञितामिति। ञिरिद्येषां ते ञातस्तेषाम्॥ ९७॥

**अदो जघुः**॥ अदो जघुरादेशो भवति निष्ठायां किति तकारे परे क्यपि च॥१०४॥ उकार उच्चारणार्थः॥ **क्तक्तवतू निष्ठा**॥ एतौ प्रत्ययौ निष्ठासंज्ञौ स्तः॥१०५॥ तथोर्धः। झबे जबाः। अद् भक्षणे। अद्यते स्म तत् जग्धम्। किं? अन्नम्॥ रः॥ दॄ विदारणे। कॄ हिंसायाम्। कॄ विक्षेपे। ऋत इर्। य्वोर्विहसे विकीर्यते स्माऽसौ विकीर्णः। जॄष् झॄष् वयोहानौ। षकारः षिद्भिदामङ् इत्यस्य विशेषणार्थः। जीर्यते स्म तत् जीर्णम् किं? शरीरम्। गीर्यते स्म तत् गीर्णम्। पुरी पूर्तौ। पूर्यते स्माऽसौ पूर्णः॥ 'रः' इति सूत्रं न पिपर्तेः॥ पोरुर् पिपर्ति स्म इति पूर्तः॥

(च०) सूत्रम्—'अदो जघुः'॥ इति। अद्भक्षणे इत्यस्य धातोर्जघुरित्ययमादेशो भवति। तकारादौ किति परे। अद् क्तप्रत्ययः। जघ् आदेशः। 'तथोर्धः' 'झबे जबाः' घस्य गः। 'स्वरहीनं०' प्रथमैकवचने। 'अतोऽम्' 'अम्शसोरस्य, 'मोऽनुस्वरः' जग्धम्। अन्नम्॥ सूत्रम्—'रः'॥ पञ्चम्येकवचनान्तम्। 'स्वरहीनं' 'य्वोर्वि०' रेफात् रकारात्परस्य कितः तकारस्य नकरो भवति। उदाहरणम्। कॄञ् विक्षेपे विकरणे हिंसायां वा कॄ क्तप्रत्ययः। त। 'ऋत इर्' 'रः' इति सूत्रेण तस्य नः। 'य्वोर्वि हसे' इति दीर्घः 'ष्रूर्नो णो०' 'राद्यपो द्विः, 'जलतुम्बिका०' विकीर्णम्। प्रथमैकवचने। 'अतोऽम्'॥ जॄष् धातुश्च वयोहानौ वार्धक्ये। षकारः षित्कार्यार्थः। जॄ क्तप्रत्ययः। 'ऋत इर्' रकारान्तत्वात् 'रः' इति सूत्रेण तस्य नः। 'य्वोर्विहसे' 'ष्रूर्नो णो०' 'राद्यपो द्विः' जलतुम्बिका० जीर्णं शरीरम्। एवं झॄष्झीर्णं शरीरम्॥

(प्र०) र इति। कृतस्यापत्यं कार्तिरित्यत्र वृद्धेरसिद्धत्वान्न स्वरात्तो वेत्यतो वेत्यस्यानुवृत्तये व्यवस्थया क्वचिन्न क्वचिद्वेति बोध्यम्। तेन पूर्वं इत्यादौ न॥

**ल्वाद्योदितः**॥ ल्वादेरोदितश्च धातोः कितस्तो नो भवति॥१०६॥ लुञ् छेदने। लूयते स्मासौ लूनः॥ ज्या वयोहानौ। ग्रहां क्ङिति च।

जानाति स्मासौ जीनः ॥ भुजो कौटिल्ये । चोः कुः । भुज्यते स्माऽसौ भुग्नः । ओहाक् त्यागे । स्थामी । हीयते स्मासौ हीनः ॥ षूङ् दूङ् दीङ् धीङ् रीङ् मीङ् दीङ् लीङ् व्रीङ् एते नव आदितः । षूङ् प्राणिप्रसवे । सूयते स्मासौ सूनः ॥ दूङ् परित्यागे । दूङ् दुःखे । दूयते स्मासौ दूनः ॥ डीङ् विहायसा गतौ ॥ **डीङ् इडभावः** ॥१०७॥ डीयते स्मासौ डीनः ॥ धीङ् धारणे । धीङ् सामर्थ्ये । धीयते स्मासौ धीनः ॥ रीङ् क्षरणे । रीङ् स्रवणे । रीयते स्मासौ रीणः ॥ मीङ् प्राणवियोगे । मीङ् हिंसायाम् । मीयते स्माऽसौ मीनः ॥ दीङ् क्षये । दीयते स्मासौ दीनः ॥ लीङ् आश्लेषणे । लीङ् विलपने । लीयत स्मासौ लीनः । व्रीङ् वरणे । व्रीयते स्मासौ व्रीणः । एते ओदितः । ओप्यायी वृद्धौ ॥ **प्याय पी** ॥ प्यायः पी आदेशो भवति निष्ठायाम् ॥ १०८ ॥ प्यायते स्मासौ पीनः ॥ क्षि क्षये ॥ **क्षियो निष्ठायां कर्तरि दीर्घो वाच्यः** ॥ १०९ ॥ **दीर्घादेव क्षियो निष्ठातस्य नो वाच्यः** ॥ ११० ॥ क्षीयते स्मासौ क्षीणः । क्षीणवान् । भावकर्मणोस्तु क्षीयते स्म तत् क्षितं तेन । क्षितः कामो मया ॥ **यरलवसंयोगादेरादन्तान्निष्ठातस्य नो वाच्यः** ॥ १११ ॥ द्रा स्वप्ने । द्रायते स्मासौ द्राणः ॥ ग्लै म्लै हर्षक्षये । ग्लायते स्मासौ ग्लानः । म्लानः ॥ हि गतौ । हीयते स्मासौ हितः ॥

( च० ) सूत्रम्—'ल्वाद्योदितः' ॥ लू आदिर्यस्य स ल्वादिः ओकार इत् यस्य स ओदित् । ल्वादिश्च ओदित् च ल्वाद्योदित् तस्मात् पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ल्वादयो धातुपाठोक्ताः । ओदितश्च । ओहाक् त्यागे । ओहाङ् गतौ । ओप्यायी वृद्धौ । इत्यादयस्तेभ्यः परस्य क्तिस्तकारस्य नकारो भवति । उदाहरणम् ॥ लूञ् छेदने । लू । 'क्तक्तवतू' त । 'ल्वाद्योदितः' इति तस्य नः । प्रथमैकवचने 'स्रोर्वि०' लूनः ॥ क्षि क्षये । क्षि क्तप्रत्ययः । 'शमां दीर्घः' केचित्तु क्ष्यादेर्दीर्घता च । 'ल्वाद्योदितः' इति तस्य नः । 'ष्रनों णो०' 'स्रोर्विसर्गः' क्षीणः ॥ ग्लै हर्षक्षये ग्लै क्तप्रत्ययः । 'संध्यक्षराणामा' ग्लै इत्यस्य ग्ला । 'ल्वाद्योदितः' इति तस्य नः । 'स्रोर्वि०' ग्लानः । एवं म्लै गात्रविनामे । म्लानः ॥ ओहाक् त्यागे । हा क्तप्रत्ययः । 'स्थामी' 'ल्वाद्योदितः' इति तस्य नः । हानः ॥ ओप्यायी धातुः वृद्धौ । 'प्यायः पी' ओप्यायी इत्यस्य धातोः पी इत्यादेशो भवति इति प्यायोस्थाने पी । 'ल्वाद्योदितः' इति तस्य नः । पीनः । एवं दीनः लीनः दूनः ॥ १०६-१११ ॥

( प्र० ) ल्वाद्योदित इति । लू आदिर्यस्य स ल्वादिः । ओदिद्यस्य स ओदित् । ल्वादिश्च ओदिच्च ल्वादित् तस्मात् ॥ १०६ ॥

त्रैङ् पालने॥ **त्राणाद्या वा॥** त्रणादीनां नत्वं वा निपात्यते॥११२॥ त्रायते स्मासौ त्राणः त्रातः॥ घ्रा गन्धोपादाने। जिघ्रति स्मासौ घ्राणः घ्रातः॥ ह्री लज्जायाम्। ह्रीयते स्मासौ ह्रीतः ह्रीणः॥ नुद् प्रेरणे। नुद्यते स्मासौ नुन्नः-नुत्तः॥ विदिर् विचारणे। विद्यते स्मासौ-विन्नः-वित्तः॥

वेत्ति रूपं विद ज्ञाने विन्ते विदिर् विचारणे।
विद्यते विद सत्तायां विद्लृ लाभे च विन्दति॥ १०॥

उन्दी क्लेदे। उद्यते स्मासौ उन्नः—उत्तः॥ वा गतिगन्धनयोः। निर्वाति स्म वा निर्वायते स्मासौ निर्वाणः—निर्वातः॥ विद् सत्तायाम्। विद्यते स्मासौ विन्नः—वित्तः। एते त्राणाद्या ज्ञेयाः॥

(च०) त्राणाद्याः शब्दाः अतीते कालेऽर्थविशेषे सिद्धा एव वा निपात्यन्ते॥ त्रै रक्षणे इत्यस्य त्राणः त्रातः। इति रूपद्वयम्। त्रै क्तप्रत्ययः। 'संध्यक्षराणामा' त्रातः। पक्षे क्तप्रत्ययेन सहैव त्राण इति निपात्यन्ते॥ एवं ह्री लज्जायाम् इत्यस्य ह्रीणः ह्रीतः॥ वाधातुः गतिगन्धनयोः। निर्पूर्वः। निर्वाणः। एवं घ्राणः घ्रातः॥ वित्तं विन्नम्। उत्तः उन्नः। नुत्तः नुन्नः॥ ११२॥

**सम्पर्युपेभ्यः करोतेः सुट्॥** सं परि उप एभ्यः परस्य करोतेर्धातोर्भूषणेऽर्थे शोभनेऽर्थे च वाच्ये सति सुट् आगमो भवति॥११३॥ टित्त्वादादौ। संस्क्रियते स्मासौ संस्कृतः। परिष्क्रियते स्मासौ परिष्कृतः। उपस्क्रियते स्मासौ उपस्कृतः। यदा संस्कृतिर्न तदा संक्रियते स्मासौ संकृतः। परिक्रियते स्मासौ परिकृतः। उपकृतः॥ भावे घञ्। संस्क्रियते स्मासौ संस्कारः। अलंक्रियते स्मासौ अलंकारः॥ विद ज्ञाने। विद्यते स्मासौ विदितः। जातः खातः॥

(च०) 'संपर्युपेभ्यः०'॥ सम् परि उप इत्येतेभ्यःपरस्य करोतेर्धातोर्भूषणे अलंकरणार्थे सुडागमो भवति टित्त्वादादौ। उकार उच्चारणार्थः। कृ क्रमेण संपरिउपपूर्वः। क्तप्रत्ययः। सर्वत्र सुडागमः 'स्वरहीनं०,संस्कृतः परिष्कृतः उपस्कृत अलंकृत इत्यर्थः॥११३॥

**दो दत्ति॥** दा इत्यस्य दद्भवति किति ताकि परे॥११४॥ दीयते स्मासौ दत्तः। ददाति स्म इति दत्तवान्। त्रितो नुम्॥

(च०) सूत्रम्—'दो दत्ति'॥ दः षष्ठ्येकवचनान्तम्। 'आतो धतोः' इत्याकारलोपः। 'स्वरहीनं०' स्रोर्वि०'। दत्। प्रथमैकवचनान्तम्। 'हसेपः। ति सप्तम्येकवचनान्तम् 'स्वरहीनं०' डुदाञ् दाने इत्यस्य धातोस्तकारादौ किति परे दत् आदेशो भवति। दा क्त दत् आदेशः 'स्वरहीनं०' 'स्रोर्वि०' दत्तः। क्तवतुप्रत्यये दत्तवान् भवच्छब्दवत्॥ ११४॥

( प्र० ) दो दत्ति इति ॥ ददातेर्दथादेशः स्यात् किति तकारे । दाप् लवने अस्य तु न व्याख्यानात् प्रयोगाभावाच्च । थान्तोऽयमादेशः । किञ्च यदि तान्त आदेशस्तदा विदत्तमित्यादौ आद्यन्तवदेकस्मिन्निति न्यायेन नाम्यन्तोपसर्गस्येति दीर्घः स्यात् ॥ यदि दान्तस्तदा दस्तस्येदि नत्वं स्यात् । यदि धान्तस्तदा तथोर्धं इति तस्य धः स्यात् । थान्ते तु 'खसे चपा' इति थस्य तः ॥ ११४ ॥

**स्वरात्तो वा** ॥ स्वरादुत्तरस्य दा इत्यस्य वा तो भवति किति तकि परे ॥११५॥ प्रकर्षेण दीयते स्मासौ प्रत्तः प्रदत्तः । अवदीयते स्मासौ अवदत्तः अवत्तः ॥ **नाम्यन्तोपसर्गस्य दीर्घो भवति** ॥११६॥ **ददातेस्तो वाच्यः** ॥११७॥ नितरां दीयते स्म तत् नीत्तं निदत्तम् । पर्यासमन्ताद्भावेन दीयते स्म तत् परिदत्तम् ॥ **दधातेर्हिर्निष्ठायां वाच्यः** ॥११८॥ धीयते स्मासौ हितः । दधाति स्मासौ हितवान् ॥ **जहातेश्च किति** ॥ जहातेर्धातोः किति प्रत्यये परे हिरादेशः स्यात् ॥११९॥ तेन पूर्वं हित्वा । हीयते स्मासौ हितः । अहासीदिति हितवान् ॥ **ध्याख्यापॄमूर्च्छिमदां क्तस्य नत्वाभावो वाच्यः** ॥१२०॥ ध्यै चिन्तायाम् । ध्यायते स्मासौ ध्यातः ॥ ख्या प्रकथने । ख्यायते स्मासौ ख्यातः ॥ पॄ पालने । पूर्यते स्मासौ पूर्तः । पोरुर् । य्वोर्विहसे ॥ मूर्छा मोहसमुच्छ्राययोः ॥ **राल्लोपश्छ्वोः** ॥ रेफादुत्तरयोश्छ्वोर्लोपो भवति किति तकारे परे ॥१२१॥ मूर्च्छ्यते स्मासौ मूर्तः ॥ मदी हर्षे । मद्यते स्म इति मत्तः ॥ यज देवपूजासङ्गतिकरणदानेषु । यजेः क्तः । षत्वम् । ष्टुत्वम् । सम्प्रसारणम् । इज्यते स्म तत् इष्टं इष्टवान् ॥

( च० ) सूत्रम्—'स्वरात्तो वा' ॥ स्वरात् पञ्चम्येकवचनान्तम् ।'ङसिरत्''सवर्णे०'। तः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' ॥ सस्वरादुपसर्गात्परस्य दाधातोः न इत्यादेशो वा भवति पक्षे वा दत् इत्यादेशो भवति तकारादौ किति परे । दा प्रपूर्वः । एकत्र त एकत्र दत् क्तप्रत्ययः । प्रत्तम् प्रदत्तम् । एवम् अवपूर्वः। अवत्तम् अवदत्तं चेति रूपद्वयम् । प्रादायि इति प्रत्तं प्रदत्तम् । उपात्तम् ॥ यज् देवपूजासंगतिकरणदानेषु । यज् क्तप्रत्ययः । 'यजां यवराणां०' इति संप्रसारणम् । यकारस्य इकारः । 'छशषराजादेः षः' इति षत्वम् । 'ष्टुभिः ष्टुः' इष्टम् । क्तवतुप्रत्यये इष्टवान् ॥१२१॥

( प्र० ) स्वरात्त इति ॥ स्वरपदं स्वरान्तोपसर्गोपलक्षकम् ॥ तेन देवदत्त इत्यादौ न ॥ ११५ ॥

टुवप् बीजतन्तुसन्ताने । उप्यते स्म तत् उप्तम् ॥ वह प्रापणे । हो

# ❀ लिङ्गानुशासनप्रक्रिया ❀ ३६ ॥

लिङ्गराजं नमस्कृत्य मत्वा पूर्वमुनेर्वचः ।
सारस्वतप्रक्रियायां कुर्वे लिङ्गानुशासनम् ॥ १ ॥

**अथ लिङ्गानुशासनम् ॥ १ ॥**

**❀ चक्रधरा ❀**

ग्रन्थे विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति—लिङ्गराजमिति । लिङ्ग्यतेऽनेनेति लिङ्गं शिवमूर्त्तिविशेषः । लिगि गतावस्माद् घञ् । लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि शिवमूर्त्तिविशेषे च मोहनेऽपि नपुंसकमिति मेदिनी । तस्मिन् राजेति लिङ्गराजः, उत्तमशिवमूर्त्तिविशेषः, तन्नामकशिवो वा । राजाहःसखिभ्यष्ट इति टप्रत्ययः । तं नमो नतिं कृत्वेति नमस्कृत्य, क्त्वः 'समासे क्यप्' इति समासे क्यप् । ह्रस्वस्येति तुक् । वाचस्पत्यादित्वाद्विसर्गस्य सः । पूर्वमुनेः पाणिनेर्वचः सूत्रात्मकं वचनं मत्वा बुद्ध्वा । मन ज्ञाने पूर्वकाले क्त्वा । सारस्वतप्रक्रियामस्मिन् ग्रन्थे लिङ्गानां स्त्रीपुंसादीनामनुशासनं तदभिधं प्रकरणं कुर्वे ॥ कुरुच्छुरोरिति न दीर्घः अहमिति कर्तृपदमध्याहार्यम् ॥ १ ॥

लिङ्गानुशासनं प्रकुर्वाणो ग्रन्थकर्ता सूत्रमारचयति—अथेति । अथशब्दोऽधिकारद्योतकः । अनुशिष्यते व्याख्यायते लक्षणभेदोपायफलैर्येन तदनुशासनम् । लिङ्गानामनुशासनं लिङ्गानुशासनम् ॥ १ ॥

**स्त्री** ॥ अधिकारसूत्रे एते ॥ २ ॥

( चक्र० ) अधिकारसूत्र इति । उभयोरधिकारसूत्रत्वेऽपि 'लिङ्गानुशासनमि'त्याशास्त्रसमाप्तेः, स्त्रीति 'ताराधारा—' इति यावदिति विवेकः । अत्रापि लिङ्गं शास्त्रोयं विवक्षितम् । तच्चार्थनिष्ठम्, तत्रायं विशेषः । शब्दशक्तिस्वभावेन कस्यचित् सर्वलिङ्गप्रतिपादकता, कस्यचिद् एकलिङ्गप्रतिपादकता, कस्यचिद् द्विलिङ्गप्रतिपादकता चेति ॥२॥

**ऋकारान्ता मातृदुहितृस्वसृपोतृननान्दरः** ॥ ऋकारान्ताः पञ्चैते शब्दाः स्त्रीलिङ्गाः ॥ ३ ॥

( चक्र० ) ऋकारान्ता इति । स्त्रीति पदमेषु सूत्रेषु संबध्यते । तच्च भावप्रधाननिर्देशेन स्त्रीत्वपरम्, तस्य लिङ्गपदेन बहुव्रीहिसमासे स्त्रीलिङ्गा इति सामानाधिकरण्येन व्यवहारः । मात्रादिशब्दानां विशेषत उपादानात्पञ्चेति लब्धम् ॥ यद्यपि शब्दानामर्थानां चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहारयोग्यानामेव सम्भवति, नत्वस्मदादीनामज्ञानाम्, तथाप्यस्मदाद्युद्देशेन शास्त्रप्रवृत्तेर्यथा लघूपायेनास्मदादीनां ज्ञानं संभवेत्ततोऽयमारम्भः ॥ ३ ॥

**अन्यूप्रत्ययान्तः** ॥ अनिप्रत्ययान्त ऊप्रत्ययान्तश्च स्त्रियां स्यात् ॥ अवनिः । वधूः ॥ ४ ॥

( चक्र० ) अन्यूप्रत्ययान्तः । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च स्त्रियां स्यात् ॥

अवनिः । 'अर्त्यादेरनिः' इत्यनिः । वधूः । 'वहो धश्च' । इत्यूः ॥ ४ ॥

**अशनिभरणधरणयः स्त्रीपुंसयोः** ॥ अशन्यादयः स्त्रियां पुंसि च भवन्ति ॥ पूर्वस्यापवादः । इयमयं वा अशनिः ॥ ५ ॥

( चक्र० ) अशनिभर ॥ पूर्वसूत्रापवादोऽयम् ॥ ५ ॥

**मिन्यन्तः** ॥ मिनिप्रत्ययान्तः स्त्रियां स्यात् ॥ भूमिः ॥ ६ ॥

( चक्र० ) मिन्यन्तः । भूमिः । 'नियो मिः' इत्यतो मिनित्यनुवर्त्य विहितो 'भुवकिच्चेति' मिक् । ग्लानिः । 'वहादेर्निः' इति निः ॥ ६ ॥

**वह्निवृष्णयग्नयः पुंसि** ॥ वह्न्यादयः पुंसि स्युः । पूर्वसूत्रापवादः । निप्रत्ययान्ता अप्येते पुंसि स्युः ॥ ७ ॥

( चक्र० ) वह्न्यादिशब्दानां निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते आह—वह्निवृष्णि । वृष्णिः । 'स्वादेर्निः कित्' इति निः । अग्निः । 'अङ्गेर्नलोपश्च' इति निः । वह्निः । वहादेर्निः' इति नि ॥ ७ ॥

**श्रोणियोन्यूर्मयः स्त्रीपुंसयोः** ॥ इयमयं वा श्रोणिः, योनिः, ऊर्मिः ॥ ८ ॥

( चक्र० ) श्रेणियोन्यूर्मयः । श्रोणिः । योनिः । 'वहादेर्निः' इति निः । ऊर्मिः । 'अर्त्तेरुर्च' इति मिः ॥ ८ ॥

**क्त्यन्तः** ॥ क्तिप्रत्ययान्तः स्त्रियां स्यात् ॥ कृतिरित्यादिः ॥ ९ ॥

( चक्र० ) क्त्यन्तः । क्तिप्रत्ययान्तः स्त्रियां स्यात् । कृतिः । क्तिरिति क्तिः ॥ ९ ॥

**ईश्च** ॥ ईप्रत्ययान्तः स्त्री स्यात् ॥ लक्ष्मीः ॥ १० ॥

( चक्र० ) ईश्च । अत्र ईकारःप्रत्यय एव । पूर्वोत्तरसाहचर्य्यात् । लक्ष्मीः । 'लक्षेर्मुट्च' इति सूत्रे 'अवितृस्तृतन्त्रिभ्यः ईः' इत्यत ईरित्यस्यानुवृत्या ईप्रत्ययः । एवमव्यादिधातुभ्य ईकारप्रत्ययेऽपि स्त्रीत्वम् । तद्यथा अवीर्नारी रजस्वला, तरीर्नौस्तरी धूमः, तन्त्रीर्वीणादेर्गुणः ॥ १० ॥

**ऊदाबन्तौ** ॥ ऊदन्त आबन्तश्च स्त्रियां भवतः ॥ कुरूः । विद्या ।

( चक्र० ) ऊदाबन्तौ । 'उत ऊः' इत्यूः । आब्ग्रहणेन डाबादीनामपि ग्रहणम् । कुरूः । विद्या ॥ ११ ॥

**य्वन्तमेकाक्षरम्** ॥ इप्रत्ययान्तमेकाक्षरमुप्रत्ययान्तमेकाक्षरञ्च स्त्रियां स्यात् ॥ श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥ १२ ॥

( चक्र० ) य्वन्तमेकाक्षरम् । ईकारोऽत्र प्रत्ययः ऊकारसाहचर्य्यात् । श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥ १२ ॥

**विंशत्याद्या नवत्यन्ताः** ॥ आनवतेर्विंशत्यादयः स्त्रियां स्युः ॥ इयं विंशतिः, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः, नवतिः ॥ १३ ॥

( चक्र० ) विंशत्यादिरानवतेरिति । विंशत्यादयः सूत्रनिर्दिष्टाः ॥ १३ ॥

**दुन्दुभिरक्षेषु ॥** अक्षेषु बोधनीयेषु दुन्दुभिः स्त्रियां स्यात् । इयं दुन्दुभिः । अन्यत्रायं दुन्दुभिर्वाद्यविशेषोऽसुरो वा ॥ १४ ॥

( चक्र० ) दुन्दुभिरक्षेषु । अक्षेषु बोधनीयेषु यो दुन्दुभिशब्दः प्रयुज्यते सः स्त्रियां स्यादित्यर्थः ॥ १४ ॥

**नाभिरक्षत्रिये ॥** क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते सः स्त्रियां स्यात् । इयं नाभिः ॥ १५ ॥

( चक्र० ) नाभिरक्षत्रिये । क्षत्रियभिन्ने यो नाभिशब्दः प्रयुज्यते स स्त्रियां स्यादित्यर्थः ॥ दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि भवति । अयं नाभिः क्षत्रियः । कथं तर्हि-समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिरिति भारविः । उच्यते । दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिंगस्येति भाष्यात्पुंस्त्वमपीह साधु । अत एव नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्, द्वयोः प्राणिप्रतीके स्यात्, स्त्रियां कस्तूरिकामदे । इति मेदिनी ॥ रभसोऽप्याह । मुख्यराट् क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामद इति । एवमेवंविधेऽन्यत्रापि बोध्यम् ॥ १५ ॥

**तान्तः ॥** तप्रत्ययान्तः स्त्रियां स्यात् । ब्राह्मणस्य भावो ब्राह्मणता, देव एव देवता, जनानां समूहो जनता ॥ १६ ॥

( चक्र० ) तान्तः । 'भावे तत्वयणः' इति सूत्रविहितत ( ल् ) प्रत्ययान्तः स्त्रियां स्यात् । ब्राह्मणस्य भावो ब्राह्मणता ॥ १६ ॥

**भूमिविद्युत्सरिल्लतावनिताभिधानानि ॥** स्पष्टम् । भूमिर्भूः । विद्युत् सौदामिनी । सरिन्नदी । लता वल्ली । वनिता योषित् ॥ १७ ॥

( चक्र० ) भूमिविद्युदिति । अत्राभिधानशब्दो भूम्यादिशब्दे शक्यतावच्छेदकधर्मावच्छिन्नशक्तपरत्वेन प्रमेयशब्दव्यावृत्तिः ॥ १७ ॥

**यादो नपुंसकम् ॥** पूर्वस्यापवादः । यादः शब्दः सरिद्वाचकोऽपि नपुंसके स्यात् ॥ १८ ॥

( चक्र० ) यादो नपुंसकम् । पूर्वस्यापवादः ॥ १८ ॥

**भाः स्रुक् स्रग् दिगुष्णिगुपानहः ॥** एते स्त्रियां स्युः । इयं भा इत्यादि ॥ १९ ॥

**स्थूणोर्णे नपुंसके च ॥** एते नपुंसके स्तः, चात् स्त्रियाम् ॥ स्थूणम्, ऊर्णम्, स्थूणा, ऊर्णा ॥ २० ॥

( चक्र० ) स्थूणोर्णे नपुंसके च । चकारेण स्त्रियामित्यस्यानुकर्षणार्थमत्र लेखः । स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ॥ २० ॥

**गृहशशाभ्यां स्थूणोर्णे क्लीबे** ॥ गृहशशपूर्वे स्थूणोर्णे यथाक्रमं नपुंसके स्तः । गृहस्थूणम्, शशोर्णम् ॥ २१ ॥

**प्रावृड्विप्रुड्रुड्विट्त्विषः** ॥ एते स्त्रियां स्युः ॥ २२ ॥

( चक्र० ) प्रावृडिति । स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि 'स्वरितेनाधिकारः' इत्यस्याधिकः कार इति व्याख्यानस्यापि प्रसिद्धत्वादत्र सम्बन्धः ॥ २२ ॥

**दर्विविदिवेदिस्वनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः** ॥ एते स्त्रियां स्युः । पक्षे ईप्, दर्वी । दर्विरित्यादि ॥ २३ ॥

( चक्र० ) दर्विविदि० । दर्विशब्दो औणादिकविन् प्रत्ययान्तः । ईपि दर्वी इति ॥ २३ ॥

**नाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः** ॥ एते स्त्रियां स्युः ॥ २४ ॥

**तिथिश्च** ॥ तिथिः स्त्रियां पुंसि च स्यात् । इयमयं वा तिथिः ॥२५॥

( चक्र० ) तिथिश्चेति । अमरस्त्वाह 'तिथयो द्वयो'रिति । तथा च भारविः । तस्य भुवि बहुतिथास्तिथय इति । स्त्रीत्वे हि बहुतिथ्यः, इति स्यात् । श्रीहर्षश्च । 'निखिलान्निशि पौर्णिमातिथोनि'ति ॥ २५ ॥

**शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः** ॥ एते स्त्रियां स्युः । इयं शष्कुलिरित्यादि ॥ २६ ॥

**प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषः संवित् क्षुत्पुंमुत्समिधः** ॥ इयं प्रतिपदित्यादि ॥ २७ ॥

**आशीर्धूः पूर्गीर्द्वारः** ॥ इयमाशीरित्यादि ॥ २८ ॥

**अप्सुमनस्समासिकताकर्षाणां स्त्रीत्वबहुत्वे** । अबादीनां पञ्चानां स्त्रीत्वं बहुत्वञ्च स्यात । एता आपः । स्त्रियः सुमनसः पुष्पम् । सुमना मालती जातिः । देववाची तु पुंस्येव । सुपर्वाणः सुमनसः । बहुत्वं प्रायिकम । 'एका च सिकता तैलदानेऽसमर्था' इति भाष्यप्रयोगात् ॥२९॥

( चक्र० ) पुंस्येवेति । देवासुरात्मेत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति भावः । भाष्यप्रयोगादिति । तेन भाष्ये 'णा' इति सूत्रनिर्दिष्टानां बहुत्वं प्रायिकमिति विकल्पेनान्यत्र बहुत्वाभावेऽपि न क्षतिः ॥ २९ ॥

**स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः** । इयं स्रक्त्वक् ज्योक् वाक् यवागूः नौः स्फिक् ॥ ३० ॥

**तृटिसीमासम्बध्या** । इयं तृटिः । सीमा । सम्बध्या ॥ ३१ ॥

**चुल्लिवेणिखार्यश्च** ॥ इयं चुल्लिः । वेणिः । खारी ॥ ३२ ॥

**ताराधाराज्योत्स्नाशलाकादयश्च** ॥ स्त्रियां स्युः । इयं तारा, अरुन्धती, शलाका । इत्यादि ॥ ३३ ॥ इति सारस्वतप्रक्रियायां स्त्र्यधिकारः ।

( चक्र० ) शलाकेति । इयं स्त्रियां स्यात् । अत्र नित्यग्रहणं केचित्कुर्वन्ति अतो नित्यग्रहणादन्येषां क्वचिद् व्यभिचारः । तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितं तथान्येषामन्यलिङ्गत्वेऽपि साधुत्वमिति ॥ ३३ ॥

इति लिङ्गानुशासने स्त्र्यधिकारः ॥ १ ॥

---

## ❀ पुंलिङ्गाधिकारः ❀ २ ।

**पुमान्** ॥ अधिकारोऽयम ॥ १ ॥

**घञदन्तौ** ॥ घञ्प्रत्ययान्तोऽप्रत्ययान्तश्च पुमान् स्यात् । पाकः त्यागः भावः दायः ॥ भावार्थ एवेदम् ॥ २ ॥

( चक्र० ) भावार्थ एवेति । भावे यो घञ् तदन्तस्य 'स्वराद' इत्यनेन योऽप्रत्ययस्तदन्तस्य च पुंस्त्वं स्यादित्यर्थः । अदिति तपरकरणमसन्देहाय ॥ २ ॥

**भयलिङ्गभगपदानि नपुंसके** ॥ एतानि नपुंसके स्युः । पूर्वस्यापवादः ॥ भयम् । लिङ्गम् । भगम् । पदम् ॥ ३ ॥

(चक्र०) भयलिङ्गभगपदानि नपुंसक इति । पूर्वापवादः । नपुंसकविधानञ्च ॥ ३ ॥

**याञ्च्जामृते नङन्तः** ॥ याञ्चां विना नङ्प्रत्ययान्तः पुंसि स्यात् ॥ यज्ञः । यत्नः । प्रश्नः । याञ्चामृत इति किम् , इयं मे याञ्चा ॥ ४ ॥

( चक्र० ) याञ्च्जामृते नङन्तः । नङन्तः पुंसि स्यात् । याञ्चा स्त्रियाम् ॥ ४ ॥

**अपिद्दाधारूपः कयन्तः** ॥ अपिद्दारूपो धारूपश्च कयन्तः पुंसि स्यात् ॥ आदिः । आधिः । निधिः । वारिधिः । कयन्तः किम् , दानम् । दाधारूपः किम् , जग्धिर्बीजम् ॥ ५ ॥

( चक्र० ) अपिद्दाधारूपः कयन्तः । किप्रत्ययोऽन्तः परो यस्मात्तादृशः पिद्भिन्नो दारूपः धारूपश्च पुमानित्यर्थः । आदिः । आधिः ॥ ५ ॥

**स्त्रीपुंसयोरिषुधिः** ॥ इषुधिशब्दः स्त्रियां पुंसि च स्यात् । पूर्वस्यापवादः ॥ इयमयं वा इषुधिः ॥ ६ ॥

**देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि** ॥ एतानि पुंसि स्युः । देवाः सुराः ।

असुराः दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दमः । इत्यादि ॥ ७ ॥

( चक्र० ) देवासुरा० । अत्र पङ्कशब्दान्तद्वन्द्वं कृत्वा तस्य षष्ठीसमासाऽभिधानशब्देन कर्त्तव्यः । अभिधानशब्दः करणयुडन्तो वाचकशब्दपरः, तेन देवादिशब्दवाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दस्वरूपापेक्षया च नपुंसकत्वम् इति ॥ ७ ॥

**त्रिविष्टपत्रिभुवने क्लीबे ॥** त्रिविष्टपत्रिभुवनशब्दौ नपुंसके भवतः ॥ तृतीयं विष्टपं त्रिविष्टपम् । त्रिभुवनम् ॥ ८ ॥

( चक्र० ) त्रिविष्टपमिति ॥ स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः । अत एवामरसिंहः—'क्लीबे त्रिपिष्टपम्' इति ॥ ८ ॥

**द्याः स्त्रियाम् ॥** स्पष्टम् , इयं द्यौः ॥ ९ ॥

( चक्र० ) द्यौः स्त्रियाम् । अस्य स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽयमारम्भः ॥ ९ ॥

**इषुबाहू स्त्रियां पुंसि ॥** इषुबाहू स्त्रियां पुंसि च स्याताम् ॥ १० ॥

( चक्र० ) इषुबाहू । शरभुजपर्यायाविमौ ॥ १० ॥

**बाणकाण्डौ नपुंसके च ।** चात्पुंसि ॥ ११ ॥

( चक्र० ) बाणकाण्डौ । शराभिधानोऽयम् ॥ ११ ॥

**नान्तः ।** नान्तप्रत्ययान्तः पुंसि स्यात । राजा । तक्षा । नहि चर्मवर्मादिष्वतिव्याप्तिः, नपुंसकप्रकरणे वक्ष्यमाणत्वात ॥ १२ ॥

( चक्र० ) नान्तः । नान्तप्रत्ययान्त इत्यर्थः ॥ १२ ॥

**क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ।** एते पुंसि भवन्ति ॥ क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो वारिदः ॥ १३ ॥

**अभ्रन्नपुंसकम् ।** पूर्वस्यापवादः ॥ १४ ॥

( चक्र० ) अभ्रं नपुंसकमिति । मेघाभिधानविषये पूर्वस्यापवाद इत्यर्थः ॥ १४ ॥

**उकारान्तः ।** उकारान्तः पुंसि स्यात् । प्रभुः । इक्षुः (क) ॥ १५ ॥

**धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् ।** धेन्वादयः स्त्रियां स्युः ॥ १६ ॥

---

( क ) हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयव इति मेदिनी । करेणुरिभ्यां स्त्री नेभे इत्यमरः । एवं जातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित इति, एवमन्यत्रापि ॥

**समासे रज्जुः पुंसि च** ॥ कर्कटरज्ज्वा, कर्कटरज्जुना ॥१७॥

**श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके** ॥ एतानि नपुंसके स्युः । वसु चार्थवाचि । अर्थवाचि इति किम्, वसुर्मयूखाग्निधनाधिपेषु ॥ १८ ॥

( चक्र० ) वसु चार्थवाचि । अर्थवाचि वसुशब्दो नपुंसके द्रष्टव्यः ॥ १८ ॥

**मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च** ॥ एतानि नपुंसके स्युश्चात् पुंसि । अयं मद्गुः । इदं मद्गु ॥ १९ ॥

**रुत्वन्तः** ॥ रुत्वन्तः पुंसि स्यात् । मेरुः । सेतुः ॥ २० ॥

( चक्र० ) रुत्वन्तः । उकारो नकारेत्संज्ञकः । मेरुः । सेतुरित्यत्र स्यादेरिति तुः । सूर्यवाचकः प्रथमः ॥ २० ॥

**दारुकशेरुजतुवसुमस्तानि नपुंसके**) इदं दारु । इत्यादि ॥२१॥

( चक्र० ) दारुकशेरु । रुप्रत्ययान्ता एते ॥ २१ ॥

**सक्तुर्नपुंसके च** ॥ चात्पुंसि ॥ सक्तुः । सक्तु ॥ २२ ॥

**अदन्ता कटणथनपभमयरषसोपधाः** ॥ अदन्ता एते पुंसि स्युः ॥ **क** । स्तवकः । कल्कः । **ट** । घटः । पटः । **ण** । गुणः । गणः । पाषाणः । **थ** । रथः । **न** । इनः । फेनः । **प** । यूपः । दीपः । **भ** । स्तम्भः । कुम्भः । **म** । सोमः । भीमः । **य** । समयः । हयः । **र** । क्षुरः । अङ्कुरः । **ष** । वृषः । वृक्षः । **स** । वत्सः । वायसः । महानसः ॥ २३ ॥

( चक्र० ) अदन्ता इति । कोपधोऽकारान्तः, टोपधोऽकारान्तः, णोपधोऽकारान्तः, थोपधोऽदन्तः, नोपधोदन्तः, पोपधोदन्तः, भोपधोदन्तः मोपधोदन्तः, योपधोऽदन्तः, रोपधोदन्तः षोपधोदन्तः, सोपधोऽदन्तश्च पुंसि स्यात् ॥ उदाहरणं मूले ऊह्यम् ॥ २३ ॥

**सिबुकशालूकप्रातिपदिकांशुकोल्मुकानि क्लीबे** ॥ पूर्वसूत्रापवादः ॥ २४ ॥

**कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकानिष्कशुष्कवर्चस्कपिनाकभाण्डकापिण्डककटकशण्डकापिटकतालकफलकपुलाकानि क्लीबे च** ॥ चात्पुंसि । अयं कण्टकः-इदं कण्टकम् । इत्यादि ॥ २५ ॥

( चक्र० ) कोपधस्यापवादमाह-चिबुकेत्यादि ॥ २५ ॥

**किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि क्लीबे** । किरीटम् । इत्यादि ॥ २६ ॥

**कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि क्लीबे च ।** चात्पुंसि । कुटः—कुटम् । इत्यादि ॥ २७ ॥

( चक्र० ) टोपधस्यापवादमाह–किरीटेत्यादि ॥ २७ ॥

**ऋणलवणपर्णतोरणरणोष्णानि क्लीबे ।** पूर्वसूत्रापवादः ॥२८॥

**कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ।** चात्पुंसि ॥ २९ ॥

( चक्र० ) णोपधस्यापवादमाह–ऋणेत्यादि ॥ २९ ॥

**काष्ठपृष्ठसिक्थोक्थानि नपुंसके ।** इदं काष्ठम् । इत्यादि । काष्ठा दिगर्था स्त्रियाम् । इमाः काष्ठाः ॥ ३० ॥

**तीर्थप्रोथयूथगाथानि नपुंसके च ।** चात्पुंसि । अयं तीर्थः- इदं तीर्थम् । ॥ ३१ ॥

( चक्र० ) थोपधस्यापवादमाह–काष्ठेत्यादि ॥ ३० ॥

**जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासन-सोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।** पूर्वस्या-पवादः ॥ ३२ ॥

**मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानच-न्दनालानसमानभवनवसनसम्भावनविभावनविमानानि नपुंसके च ।** चात्पुंसि । अयं मानः—इदं मानम् ॥ ३३ ॥

( चक्र० ) नोपधस्यापवादमाह–जघनेत्यादि ॥ ३३ ॥

**पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुं-सके ।** इदं पापम् । इत्यादि ॥ ३४ ॥

**शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।** अयं शूर्पः— इदं शूर्पम् इत्यादि ॥ ३५ ॥

( चक्र० ) पोपधस्यापवादमाह–पापेत्यादि ॥ ३५ ॥

**तलभं नपुंसकम् ।** पूर्वस्यापवादः ॥ ३६ ॥

**जृम्भं नपुंसकं च ।** जृम्भम्––जृम्भः ॥ ३७ ॥

( चक्र० ) भोपधस्यापवादमाह–तलभेत्यादि ॥ ३६ ॥

**रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।** इदं रुक्मम् । इत्यादि ॥ ३८ ॥

**सङ्ग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च** । चात्पुंसि । अयं सङ्ग्रामः–इदं सङ्ग्रामम् ॥ ३९ ॥

( चक्र० ) मोपधस्यापवादमाह–रुक्मेत्यादि ।

**किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके** । स्पष्टम् ॥४०॥

**गोमयकषायमलयान्वयाव्ययानि नपुंसके च** । गोमयः–गोमयम् ॥ ४१ ॥

( चक्र० ) योपधापवादमाह—किसलयेत्यादि ।

**द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रनक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके** । इदं द्वारम् । इत्यादि ॥४२॥

( चक्र० ) रोपधापवादमाह—द्वारमित्यादि ।

**शुक्रमदेवतायाम्** । इदं शुक्रं रेतः ॥ ४३ ॥

**चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके** । चात्पुंसि । चक्रः, चक्रम् । इत्यादि ॥ ४४ ॥

( चक्र० ) रोपधस्यापवादमाह—चक्रमिति ।

**शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके** ।

**यूषकरीषमिषविषवर्षाणि नपुंसके च** । चात्पुंसि । अयं यूपः— इदं यूपम् । इत्यादि ॥ ४५ ॥

( चक्र० ) षोपधस्यापवादमाह—शिरीषेत्यादिना ॥

**पनसबिसबुससाहसानि नपुंसके** ॥ ४६ ॥

**चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च** । इदं चमसम्–अयं चमस इत्यादि ॥४७॥

**कंसं चाप्राणिनि** । 'कंसोऽस्त्री पानभाजनम्' । प्राणिनि तु–कंसो नाम कश्चिद्राजा ॥ ४८ ॥

( चक्र० ) सूत्राण्येतानि सोपधापवादकानि ॥ ४८ ॥

**रश्मिदिवसाभिधानानि** । एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ॥ ४९ ॥

**दीधितिः स्त्रियाम्** । पूर्वस्यापवादः ॥ ५० ॥

**दिनाहनी नपुंसके** । इदमप्यपवादकम् ॥ ५१ ॥

( चक्र० ) दिनाहनी । दिवसाभिधानाविमौ ॥ ५१ ॥

**मानाभिधानानि** । एतानि पुंसि स्युः । कुडवः । प्रस्थः ॥५२॥

**द्रोणाढकौ नपुंसके च** । इदं द्रोणम्-अयं द्रोणः ॥५३॥

**खारीमानिके स्त्रियाम्** । इयं खारी । इयं मानिका ॥ ५४ ॥

( चक्र० ) खारीमानिके । मानाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भः ॥ ५४ ॥

**दाराक्षतलाजासूनां बहुत्वं च** । इमे दाराः ॥ ५५ ॥

( चक्र० ) बहुत्वं च । चकारः पुंस्त्वस्य समुच्चायकः ॥ ५५ ॥

**नाड्यपजनोपपदानि व्रणाङ्गपदानि** । यथासङ्ख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ॥ ५६ ॥

**मरुद्गरुत्तरदृत्विजः** । अयं मरुत् ॥ ५७ ॥

**ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिवलिकौलिमौलिरविकविकपिमुनयः** । एते पुंसि स्युः । अयमृषिः ॥ ५८ ॥

**ध्वजगजमुञ्जपुञ्जाः** । एते पुंसि ॥ ५९ ॥

**हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः** । एते पुंसि । अमरस्तु 'मुहूर्तोऽस्त्रियाम्' इत्याह ॥ ६० ॥

( चक्र० ) अमरस्त्विति । एवं च तन्मतेऽर्धर्चादिष्वयं द्रष्टव्यः ॥ ६० ॥

**षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः** । अयं षण्डः ॥ ६१ ॥

**वंशांशपुरोडाशाः** । अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् ॥ ६२ ॥

**ह्रदकन्दकुन्दबुद्बुदशब्दाः** । अयं ह्रदः ॥ ६३ ॥

**अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः** । अयमर्घः ॥६४॥

**पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्ग-**

न्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः । अयं पल्वलः । अयं पल्लवः इत्यादि ॥ ६५ ॥

**सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः** । एते पुंसि । अयं सारथिः ॥ ६६ ॥ इति पुंलिङ्गाधिकारः ॥

( चक्र० ) अयं सारथिरिति । इति पुंल्लिङ्गाधिकारः ॥

---

## ॥ नपुंसकाधिकारः ॥ ३ ॥

**नपुंसकम्** । अधिकारोयम् ॥ १ ॥

**भावे युडन्तः** । हसनम् । भावे किम् । पचनोऽग्निः । इध्मप्रव्रश्चन कुठारः ॥ २ ॥

( चक्र० ) भावे युडन्तः । इदं च सूत्रं यद्यपि 'नपुंसके भावे क्तः' 'युट् च' इत्यनेन गतार्थन्तथापि स्पष्टार्थमुपात्तम् । एवमन्तग्रहणं बोध्यम् । इध्म व्रश्चन इति । अत्र करणे युट् ॥ २ ॥

**क्तश्च** । भावे यः क्तप्रत्ययस्तदन्तं क्लीबं स्यात् । हसितं गीतम् ॥ ३ ॥

( चक्र० ) क्तश्चेति । इदमपि सूत्रं 'नपुंसके भावे क्तः' इत्यनेन गतार्थम् । प्रत्ययग्रहणे तदन्तस्य ग्रहणात् ॥ ३ ॥

**त्वष्यणौ तद्धितौ च** । शुक्लत्वं । शौक्ल्यम् ॥ ४ ॥

( चक्र० ) त्वष्यणौ तद्धितौ । भाव इत्यनुवर्त्तते । यद्यपि 'भावे तत्वष्यणः' इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताधर्मपरः । 'भावे युडन्तः' इत्यत्र तु भावशब्दो भावनाबोधक इति भेदस्तथापि इह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः ॥ चकारात् कर्मण्यपि ब्राह्मणादिगुणवचनेभ्यो बोध्यम् । तेन ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ एवञ्च चकारादेवानुक्ततद्धितादिगतप्रत्ययान्तानि क्लीबानि बोध्यानि । तेन स्तेयम् । सख्यम् । कापेयम् । आधिपत्यम् । औष्ट्रम् । द्वहायनम् । पितापुत्रकम् । अच्छावाकीयम् । अधिस्त्रि । इत्यादिविवेच्यम् ॥ ४ ॥

**द्वन्द्वैकत्वम्** । पाणिपादम् ॥ ५ ॥

( चक्र० ) द्वन्द्वैकत्वमिति । 'प्राणितूर्य' इत्यादिना येषां द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकाभिधायकाः बोध्या इत्यर्थः ॥ ५ ॥

**हेमन्तशिशिरावहोरात्रे चाभाषायाम्** । स्पष्टम् ॥ ६ ॥

**अनल्पेच्छाया** । शरच्छायम् ॥ ७ ॥

**राजामनुष्यपूर्वा सभा** । इनसभमित्यादि ॥ ८ ॥

**सुरासेनाच्छायाशालानिशाः स्त्रियां च** । स्पष्टम् ॥ ९ ॥

( चक्र० ) स्त्रियां चेति । चेन नपुंसकमित्यनुकर्षः ॥ ९ ॥

**परवत्** । अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् ॥ **रात्राह्णाहाः पुंसि**॥१०॥

( चक्र० ) परवदिति । 'द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गमि'ति सूत्रोपात्त इत्यर्थः ॥ परपदस्य लिङ्गमिति सुत्रस्य स्मारकमिदम्, न तु अपूर्वम् ॥ १० ॥

**अपथपुण्याहे नपुंसके** ॥ ११ ॥

**संख्यापूर्वा रात्रिः** । त्रिरात्रम् ॥ संख्यापूर्वेति किम् । सर्वरात्रः ।

( चक्र० ) संख्यापूर्वा रात्रिः । संख्यापूर्वं रात्रं क्लीबमित्यस्यानुवादः ॥१२॥

**द्विगुः स्त्रियां च** । व्यवस्थया । पञ्चमूली । त्रिभुवनम् ॥ १३ ॥

( चक्र० ) द्विगुः स्त्रियां च । चान्नपुंसकमिति संबध्यते ॥ १३ ॥

**इसुसन्त** । हविः धनुः ॥ १४ ॥

( चक्र० ) इसुसन्तः । 'अच्यादेरिस्' 'जनादेरुस्' एतयोरुपात्ता एतौ ॥ १४ ॥

**अर्चिः स्त्रियां च** । इसन्तत्वेऽपि अर्चिः स्त्रियां क्लीबे च स्यात् ॥ इयमिदं वा अर्चिः ॥ १५ ॥

**छदिः स्त्रियामेव** । इयं छदिः ॥ १६ ॥

(चक्र०) छदिः स्त्रियामेवेति। यद्यपि छदिरित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन स्त्रियामित्यनेनव नित्यस्त्रीत्वलाभे सिद्धे एवकारो व्यर्थः तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्शनेन साहचर्य्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः ॥ १६ ॥

**मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि** । एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालं । वनं गहनं । मांसमामिषम् । रुधिरं रक्तम् , कार्मुकं शरासनम् । विवरं विलम् ॥ जलं वारि ॥ हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । १७ ॥

**सीरार्थौदनाः पुंसि** ॥ १८ ॥

( चक्र० ) सीरार्थौदनाः । सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः । ओदनशब्दोऽन्नवाची । भिस्साभिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति ॥ १८ ॥

**वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च** । वक्त्रः । वक्त्रम् । नेत्रः । नेत्रम् । अरण्यः । अरण्यम् । गाण्डीवः । गाण्डीवम् ॥ १९ ॥

**अटवी स्त्रियाम्** ॥ २० ॥

( चक्र० ) अटवी स्त्रियाम् । अयं वनाभिधानः ॥ २० ॥

**लोपधः** । कुलम् । कूलम् । स्थलम् ॥ २१ ॥

**तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि** । अयं तूलः ॥ २२ ॥

**शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालबालनिगलपलालबिडालखिलशूलाः पुंसि च** । चात्क्लीबे । इदं शीलम्-शीलः । इत्यादि ॥ २३ ॥

**शतादिः सङ्ख्याः** । शतम् । सहस्रम् । शतादिः इति किम् ? एकः, द्वौ, बहवः । सङ्ख्या इति किम् ! शतशृङ्गो नाम पर्वतः ॥ २४ ॥

( चक्र० ) संख्येति । संख्यावाचीत्यर्थः ॥ २४ ॥

**शतायुतप्रयुताः पुंसि च** । अयं शतः-इदं शतम् । इत्यादि ॥

( चक्र० ) शतायुत० । अयं शतशब्दोऽनन्तवाची 'शतादि'रिति पूर्वसूत्रापवादकोऽयम् ॥ २५ ॥

**लक्षा कोटिः स्त्रियाम्** । इयं लक्षा । इयं कोटिः । 'वा लक्षा-नियुतं च तत्' इत्यमरात्क्लीबेऽपि लक्षणम् ॥ २६ ॥

( चक्र० ) लक्षा कोटिः । एतयोरपि संख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् ॥ क्लीबेऽपीति । एवं चायमर्द्धर्चादिषु द्रष्टव्यः ॥ २६ ॥

**शङ्कुः पुंसि** ॥ २७ ॥

( चक्र० ) शङ्कु पुंसिः । अस्य शङ्कुशब्दस्य संख्याविशेषवाचकत्वात् 'शतादिः संख्या' इति नपुंसकत्वे प्राप्तेऽस्यारम्भः ॥ २७ ॥

**सहस्रः क्वचित्** । अयं सहस्रः--इदं सहस्रम् ॥ २८ ॥

( चक्र० ) सहस्रः क्वचित् । क्वचिदित्यर्थविशेष इति अर्थः ॥ 'सहस्रशीर्षा-पुरुषः सहस्राक्षः सहस्रपाद्' इत्यत्रानन्तवाची न चात्र सहस्रशब्दस्यानन्तपरत्वे संख्यापरत्वाभावेन सहस्रपादित्यत्र 'संख्यासुव्याघ्रादिपूर्वस्य' इति पादशब्दस्यान्त्यलोपो न स्यात् इति वाच्यम् ॥ नियतविषयपरिच्छेदकत्वरूपसंख्यात्वाभावेऽपि यथाकथञ्चित् संख्यायाः प्रतीतिरिति लोपः । वस्तुतश्छान्दसो लोप इति तूचितम् ॥ २८ ॥

**मन्द्व्यच्कोऽकर्तरि** । मन्प्रत्ययान्तो द्विस्वरकः क्लिबे स्यान्न तु कर्तरि । वर्म । चर्म । द्विस्वरकः किम् ? अणिमा । महिमा । 'अकर्तरि' किम् ? ददाति इति दामा ॥ २९ ॥

( चक्र० ) मनद्विस्वरकः । अत्र मन्प्रत्ययः श्रूयमाणनकारान्तः 'मन्धातोः' इति विहितः । चर्म । वर्मेति । चरादिधातोर्मन्प्रत्ययः । बाहुलकादिडभावः ॥ अ-

णिमादौ त्विट्। दामेत्यत्रापि 'मनूधातोः' इत्यनेनव मन्। परन्त्वयं विशेषः। उणादि-प्रत्ययान्तानां संज्ञाशब्दपरत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता, सा कल्पनीयेति कर्त्तर्य्यपि प्रत्ययः सम्भवतीति ॥ २९ ॥

**ब्रह्मन्पुंसि च। अयं ब्रह्मा—इदं ब्रह्म ॥ ३० ॥**

( चक्र० ) ब्रह्मेति। 'बृहेर्नस्य अः' इति मन्प्रत्ययः, नुमो नस्य अकारे कृते रत्वञ्च ॥ ३० ॥

**असन्तो द्विस्वरकः। यशः। मनः। तपः। द्विस्वरकः किम्। चन्द्रमाः॥३१॥**

( चक्र० ) असन्तो द्विस्वरकः। 'धातोरसुः' इति विहितोऽसुः। तस्य असोर्य-त्रानुवृत्तिस्तदन्ता अपि बोध्याः॥ 'चन्द्रे माङो डित्' इति विहितासिन्प्रत्ययान्तश्च न्द्रमस्शब्दोपि असन्तः॥ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। एवमप्सरः शब्दोऽपि ॥ ३१ ॥

**अप्सराः स्त्रियाम्। एता अप्सरसः। प्रायेणायं बहुवचनातः॥३२॥**

**त्रान्तः। पत्रम्। छत्रम्॥ ३३ ॥**

( चक्र० ) त्रान्तः। त्रप्रत्यान्तो नपुंसकः स्यात्॥ 'धातोस्त्रः' इति त्रप्रत्ययः ॥३३॥

**यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ॥ ३४ ॥**

( चक्र० ) यात्रामात्रेति। एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः ॥३४॥

**भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि।** अयं भृत्रः। न मित्रममित्रः। 'तस्य मित्राण्यमित्रास्ते' इति माघः'। 'स्यातामममित्रे मित्रे च' इति च ॥ ३५ ॥

( चक्र० ) भृत्रामित्र। पूर्वस्यापवादः ॥ ३५ ॥

**पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च ॥ ३६ ॥**

**बलकुसुमशुल्वयुद्धपत्तरणाभिधानानि।** बलं वीर्यम् ।३७।

**पद्मकमलोत्पलानि पुंसि च।** पद्मादयः शब्दाः कुसुमाभिधा-यित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह-'वा पुंसि पद्मं नलिनम्' इति ॥३८

( चक्र० ) कुसुमाभिधायित्वेऽपीति। वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः। यदि तु कुसुमविशेषाभिधायकोऽयं न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक' इति विभाव्यते तदात्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति। मतान्तरेण जलजशब्दस्य जलजातकु सुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः ॥ ३८ ॥

**आहवसङ्ग्रामौ पुंसि ॥ ३९ ॥**

( चक्र० ) आहवसंग्रामौ पंसि। एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते एवमाजिशब्दोऽपि ॥ ३९ ॥

**आजिः स्त्रियामेव ॥ ४० ॥**

**फलजातिः ॥** फलजातिवाचिशब्दो नपुंसके स्यात्। आमलकम्। आम्रम् ॥ ४१ ॥

( चक्र० )फलजातिरिति । फलोपादानाद्वृक्षपरस्यामलकीशब्दस्यस्त्रीत्वेऽपि न क्षतिः॥ ४१ ॥

**वृक्षजातिः स्त्रियामेव** । क्वचिदेवेदम् । हरीतकी ॥ ४२ ॥

( चक्र० ) हरीतकीति । हरीतक्याः फलानि हरीतक्यः ॥ ४२ ॥

**वियज्जगत्सकृत्शकन्पृषच्छकृद्यकृदुदश्वितः ॥** एते क्लीबा भवन्ति ॥ ४३ ॥

**नवनीतावतानानृतामृतानिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि॥ ४४ ॥**

**श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यस्यास्पदाकाशकण्वबीजानि ॥** एतानि क्लीबे स्युः ॥ ४५ ॥

**दैवं पुंसि च ॥** दैवम्—दैवः ॥ ४६ ॥

( चक्र० ) दैवमिति । चात्क्लीवे ।

**धान्याज्यसस्यरूप्यपण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्याशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ॥** इदं धान्यम् । इत्यादि ॥

**द्वन्द्वबर्हदुःखवडिशपिच्छाबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ॥ ४८ ॥**

**अक्षमिन्द्रिये ॥** इन्द्रिये किम् । रथाङ्गादौ माभूत् । इति नपुंसकाधिकारः ॥ ४९ ॥

( चक्र० ) रथाङ्गादाविति । आदिना देवनाक्षपरिग्रहः इति ॥

नपुंसकाधिकारः ॥

---

## ❀ अथ स्त्रीपुंसाधिकारः ❀ ४ ।

**स्त्रीपुंसयोः** अधिकारोऽयम् ॥ १ ॥

( चक्र० ) स्त्रीपुंसयोः । अधिकारोऽयम् ॥ १ ॥

**गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ॥** इयमयं वा गौः ॥ २ ॥

**मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः** ॥ इययमं वा मृत्युः ॥ ३ ॥

**उकारान्तगुणवचनं नपुंसकं च** ॥ त्रिलिङ्गम्, इत्यर्थः । पटुः-पटु-पट्वी ॥ ४ ॥

**अपत्यार्थकस्तद्धिते** ॥ औपगवः-औपगवी । इति स्त्रीपुंसा-धिकारः ॥ ५ ॥

( चक्र० ) नपुसकं चेति । चात्स्त्री पुंसाधिकारः ॥ ४ ॥

---

## * पुंनपुंसकाधिकारः * ५ ।

**पुंनपुंसकयोः** ॥ अधिकारोऽयम् ॥ १ ॥

**घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः** ॥ अयं घृतः—इदं घृतम् ॥ २ ॥

**शृङ्गार्घनिदाघोद्यमशल्यदृढाः** ॥ अयं शृङ्गः-—इदं शृङ्गम् ॥ ३ ॥

**व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः** ॥ अयं व्रजः-इदं व्रजम्

**कबन्धौषधायुधान्ताः** ॥ स्पष्टम् ॥ ४ ॥

**दण्डमण्डखण्डशमसैन्धवपार्श्वाकाशकुशकाशाङ्कुश-कुलिशाः** ॥ एते पुंनपुंसकयोः स्युः ।

'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः ।

शलाकावाची तु स्त्रियाम् । तथा च 'जानपदादिभ्यः-' इत्यादिसूत्रेणा-योविकारे ईप्-कुशी । दारुणि तु आप्-कुशा ॥ ५ ॥

**गृहमेहदेहपट्टपटहाष्टपदाम्बुदककुदाश्च** ॥ ६ ॥

इति पुंनपुंसकाधिकारः ॥ ६ ॥

( चक्र० ) कुशइति । तथा च श्रुतिः-'कुशा वानस्पत्याः स्थ ता मा वात' इति ॥

शलाकावाचीति । सा च शलाकाकाष्ठादिनिर्मिता । तत्र मानमाह—तथा-चेति ॥ ५ ॥

इति पुंनपुंसकाधिकारः ॥ ५ ॥

# सारस्वतोत्तरार्द्धसूत्रपाठा-नुक्रमाणिका ।


सूत्राणि० पृष्ठं०

अ

अकर्मकयोरात्माङ्कर्मकयोर्वा २१९
अङ्पूरे जौ इङो गाङ् वा वक्तव्यः १८०
अङ्सयोः १७४
अञि लघौ ह्रस्व उपधायाः ६९
अजेरार्धधातुके वी वक्तव्यः वसादौ वा १४०
अञ्जे सौ नित्यमिड् वाच्यः १४५
अटौ २४६
अड्द्वित्वव्यवधानेपि सुट् स्यात् १४९
अतः १४
अत उपधायाः ३३
अतिशये हसादेर्यङ् द्विश्च १९६
अतिबृंहिभ्यां मनिण् २८२
अत्यर्तिव्ययतीनां थपो नित्यमिट् ५४
,, ८३
अत्र णत्वाभावो वाच्यः २०१
अत्रभवत्तत्रभवच्छब्दौ पूजार्थे निपात्येते २७३
अत्वतो नित्यान्निटस्थपो वेट् ४५
अदसोऽमू आदेशः २५६
अदादेर्लुक् ८४
अदे ९
अदो जघुः २६३
अदो दिस्योरडागमो वक्तव्यः ८४
अद्विरुक्तस्य ह्वयतेः सम्प्रसारणं वक्तव्यम् ८३
अन उस् ११२
अन उः २४९
अनः २५२
अनद्यतनेऽतीते १४
अनपि च हसात् १९६
अनिटो नामिवतः ३२
अनिति ९७
अनुपसर्गाज्जानातेरात्मगामिनि फले आत्मनेपदं वाच्यम् २२०
अन्यत्र सो जः १९१
अप् कर्तरि ८
अपित्तादिर्ङित् ८
अपिद्दास्थामित्वं सेर्ङित्वं आत्मनेपदे वाच्यम् ७२
अपिरञ्जदंशस्वञ्जष्वञ्जाम् ६८
अप्ययोराम्नित्यं २७२
अप्रत्ययोङिद्वत् १५१
अबादावीपि तित्स्मि ११०
अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः २६०
अमनुष्यकर्तृके च २४१
अयकि १९९
अर्चिरुचिशुपिहुसृपिछादिछर्दिभ्य इस् प्रत्ययो भवति २८५
अलंकृञ् निराकृञ् प्रजन् उत्पत् उत्पच् उत्पदुन्मद् उन्मत् रुच् अपत्रपवृतुवृधुसहचरभूभ्राज् अन्त एभ्य इष्णुः २७५
अलं खल्वोः प्रतिषेधे ३०७
अल्लोपिनो नाङ्कार्यम् १७१
अवतेर्मुक् २८२
अवितॄस्तृतन्त्रिकण्ठिभ्य ईः २८६
अव्यवधानञ्च पुरुषविशेषः १०
अशिष्टव्यवहारदण् प्रयोगे चतुर्थ्यर्थे ३०७
अशेरनायो वा १९४
अश्ववृषयोर्मैथुनेच्छायां यः प्रत्ययः सुगागमश्च २१६
असरूपोऽपवादः प्रत्यये स्त्रियां वा बाधकः सरूपस्तु नित्यम् १९६
असवर्णे स्वरे पूर्वेकारोकारयोरियुवौ वक्तव्यौ ३९
असि नलोपो वाच्यः २८५
अस्तेरनपि भू वक्तव्यः ९४
अस्तेरीट् ९४
अस्य घान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे २८५

| सूत्राणि० | पृष्ठं० |
| --- | --- |
| अस्यतिवक्तिख्यातीनामात्मनेपदे सेङौ वाच्यः | १८२ |
| अस्यतेर्ङे थुग्वक्तव्यः | १३२ |
| आङो दोऽनस्याविहरणे | २१८ |
| आङो यमहनः | २१९ |
| आचार उपमानात् | २१६ |
| आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु कृञः ख्युट् वाच्यः | २४८ |
| आतः | ११८ |
| आतसकोकारलोपः स्वरे | ७८ |
| आतो ङः | २४३ |
| आतो णप्डौ | ५१ |
| आतोऽनपि | ६१ |
| आतोऽन्ताऽदन्तः | २३ |
| आतो मनिन्क्वनिब्वनिपः | २५२ |
| अतो युक् | २२६ |
| आदनुदात्तङितः | ३ |
| आदन्तविद्द्विषामन उस् वा वक्तव्यः | ८५ |
| अदन्तानां यमिरमिमनीनां सेरिट् सक् च पे वक्तव्यौ | ४६ |
| अदाथ इः | ११ |
| आदितकर्मणि निष्ठा कर्तरि च वाच्या | २६२ |
| आदीदितः | २६२ |
| आदृतः क्विब्भिश्च भूते | २८० |
| आदेः ष्णः स्नः | २९ |
| आद्भुवि कर्मणि | २२२ |
| आप्नोतेरीः | ११३ |
| आभ्वोर्णादौ | १७ |
| आमि विदेर्न गुणः | ९३ |
| आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृद् आत्मनेपदं भ्वसोर्नात्मनेपदम् | ६४ |
| आयः | ४४ |
| आलौ ञिलोपाभावो वाच्यः | २७७ |
| आशिषि | १९ |
| आशीःप्रेरणयोः | १३ |
| आशीर्यादादेः पं किदिति वक्तव्यम् | १९ |
| आ सर्वादेः | २५५ |
| असेरानई | २७७ |
| आहश्च पञ्चानाम् | ११० |
| **इ** | |
| इक्श्तिपौ धातुनिर्देशे | ३०५ |
| इक्कृष्यादिभ्यः | ३०५ |
| इखस्वि | २५४ |
| इङः से गम् वाच्यः | ११२ |
| इङादेर्णौ पुक् च | १८० |
| इङो णादौ गा वक्तव्यः | १०५ |
| इङो वा गी सौ लङि च तत्परस्य ङित्वं वाच्यम् | १०५ |
| इच्चातः | २१५ |
| इच्छायामात्मनः स | १८६ |
| इञ् अजादिभ्यः | ३०५ |
| इट ईटि | २५ |
| इणः किति णादौ पूर्वस्य दीर्घो वक्तव्यः | ९१ |
| इणः क्ङिति स्वरे यो वक्तव्यः | ९१ |
| इणिको सिलोपे गा वक्तव्यः | ९१ |
| इणो दीर्घता क्सौ वक्तव्या | २६१ |
| इणन्यकर्तरि | २२३ |
| इण्नश्जिभ्रृगमिभ्यः क्वरप् वाच्यः | २७१ |
| इण्स्तुवृदृमृशासृजुषृखन् एभ्यः क्यप् वाच्यः | ३०० |
| इदिचदिशकिरुदिभ्यो रः | २८३ |
| इदितो नलोपाभावो वाच्यः | २९ |
| इदितो नुम् | २९ |
| इषादेरङर्थे | ३०३ |
| इषुसहलुभरिषरुषामानपि तस्येड् वा वक्तव्यः | ४७ |
| इषेरुरछश्च | २७९ |
| इषेश्छान्ता | ३०१ |
| इष्णुप्रत्यये परे ञन्तानां ञिलोपाभावो वाच्यः | २७५ |
| इष्णुस्नुक्नुः | २७४ |
| इशशीङो | ३०२ |
| इस्मन्त्रासुकः सर्वधातुभ्यः | २८५ |
| इस्से | ११२ |
| **ई** | |
| ईटो ग्रहाम् | ५८ |
| ईडीशोः सध्वयोरीड्वक्तव्यः | १०३ |
| ईपि वनो नस्य रो वाच्यः | २५३ |

| सूत्राणि० | पृष्ठं० |
|---|---|
| ईर्वा हौ | ११६ |
| ईषद्दुःसुषु खल्‌ | २९३ |
| ई हसे | १६१ |

उ

| | |
|---|---|
| उः | ७७ |
| उदकस्य | २९२ |
| उदश्चरस्त्यागे | २१९ |
| उदः स्थास्तम्भोः सलोपश्च | २९३ |
| उदित क्त्वा वेट् | ३०७ |
| उद्भिभ्यां तपः | २१९ |
| उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः | १६९ |
| ,, | १७९ |
| उपधाया लघोः | २४ |
| उपसर्गकर्माधारेषु दाधोः किः | २९२ |
| उपसर्गस्थनिमित्तान्नकारस्य णो वाच्यः | २७० |
| उपसर्गस्थानिमित्तान्नेर्गदादा णत्वं वाच्यम् | ३३ |
| उपात्किरतेश्छेदेर्थे सुड् वाच्यः | १९९ |
| उप्रत्ययः | २८३ |
| उरसः सलोपो सुम्वा | २४४ |
| उष्विदूजागृणामाम्वा वक्तव्यः | ९० |
| उसि जागर्तेर्धातोर्गुणो वक्तव्यः | ९८ |
| उस्यालोपः | ५३ |

ऊ

| | |
|---|---|
| ऊदिश्च ञिर्ङित्करणे स धातुर्ङेरङ् स्वरादेर्ढज ओज ढश्च | २१९ |
| ऊदिता वा | ३१ |
| ऊर्णोतेर्गुणो दिस्योः | १११ |
| ऊर्णोतेराम्न | १११ |
| ऊर्णोतेर्वा वृद्धिः | १११ |
| उर्णोतेर्वा वृद्धिः सौ परे | १११ |
| ऊर्णोतेरिडादिः प्रत्ययो वा ङित् | १११ |
| ऊष्मवाष्पाभ्यामुद्वमने यङ् वाच्यः | २१४ |

ऋ

| | |
|---|---|
| ऋकारान्ताच्च | २४० |
| ऋकारान्तानामृदुपधानां च यङ्लुकि सति पूर्वस्य रुक्रिक्रीक् आगमा वक्तव्याः | ०७२ |
| ऋकारादौ नामधातौ वा ऋकारानुबन्धस्य नुमागम एव भवति न दीर्घता वक्तव्या | २७० |
| ऋत इर् | ९८ |
| ऋतेरीयङ् स्वार्थेऽनपितु वा | ८३ |
| ऋतो रिः | २०२ |
| ऋत्वतो रीग्वाच्यः | २०१ |
| ऋदन्तस्य थपो नेट् | ६७ |
| ,, | ७८ |
| ऋदुपधात्क्यप् | २९९ |
| ऋप्रोरिः पूर्वस्य | ११४ |
| ऋप्रोर्दिस्योरडागमो वक्तव्यः | ११४ |
| ऋसंयोगात् णादेरकित्त्वं वाच्यम् | २८ |
| ,, | ११४, ९८ |
| ऋस्तुसुहृमृक्षिक्षुभामान् यावाजक्षरतीश्यैङ्पद एभ्यो मः प्रत्ययो भवति | २८२ |
| ऋहसात् घ्यण् | २९६ |

ए

| | |
|---|---|
| एजां खश् | २४७ |

ओ

| | |
|---|---|
| ओदौतोर्यः प्रत्ययः स्वरवत् | २९८ |
| ओरावश्यके घ्यण् | २९८ |
| ओरौ | ८९ |
| ओर्वा हेः | १३६ |

औ

| | |
|---|---|
| और्वमोर्वा लोपः | १३९ |
| कथमादिषु | ३०९ |

क

| | |
|---|---|
| कमेरङ् द्वित्वे वाच्ये | ६९ |
| कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः | ६९ |
| करणे उपपदे यजेर्णिनिर्वाच्यः | २६७ |
| करणे च | २१२ |
| कर्तरि पं च | ७ |
| कर्तरिक्तिश्च | ३०३ |
| कर्तर्युपमाने णिनिर्वाच्यः | २६७ |
| कर्तुर्यङ् | २१९ |
| कर्मणि संपूर्वाच्च | २४९ |
| कर्मवत्कर्मणा तुल्यक्रियः | २३० |
| कर्मव्यतिहारेऽन्यत्र हिंसादेरात् | २२१ |

| सूत्राणि० | पृष्ठं० |
|---|---|
| कवतेर्यङि चुत्वाभावो वाच्यः | २०४ |
| कार्येण | २४३ |
| कालसमयवेलासु तुम् | २८८ |
| कासादिप्रत्ययादाम्कृअस्भूपरः | ३६ |
| किमिदमः कीश् | २९६ |
| कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङिद्वत् | १९४ |
| कुर्छुरोर्न दीर्घः | १४९ |
| कुहोश्चुः | २९ |
| कृञः क्यपि वा रिङ् वक्तव्यः | २९९ |
| कृञो नित्यं वमोरुलोपो वाच्यः | १४९ |
| कृञोयक्का | ३०१ |
| कृञो ये | १४९ |
| कृतः | २३६ |
| कृतद्वित्वानामेकस्वराणामादन्तानां च वसेरेव कसेरिड्वाच्यः नान्येषाम् | २६९ |
| कृत्कर्तरि च | २३५ |
| कृपिचृत्योर्न क्यप् | २९९ |
| कृपो रोलः | ७५ |
| कृवापाजिमिस्विदिसाशूङ् एभ्य उण्प्रत्ययो भवति | २८१ |
| कृल्वादि | ३०२ |
| कृषादीनां रो वा वक्तव्यः | ४९ |
| कृषादीनां वा सिर्वक्तव्यः | ४९ |
| ,, | १९६ |
| कृगृध्रुदृप्रच्छस्मिङ्वञ्ज्वशूङ्तीसस्येड् वक्तव्यः | १९० |
| क्ङित्यद्वगुसि | ९ |
| क्तक्तवतू | २९९ |
| क्तक्तवतू निष्ठा | २६१ |
| क्तस्य च वर्तमाने | २६२ |
| क्तरापादिभ्यः | ३०४ |
| क्तो वा सेट् | २६० |
| कपि ञे गुणः | ३०८ |
| क्रमः पे चतुर्षु दीर्घता वक्तव्या | ४५ |
| क्रमुभ्रमुत्रसि त्रुटिलषूभ्राशभ्लाशो वा यः प्रत्ययो वक्तव्यः | ४५ |
| क्रादेर्णादेः | १८ |
| क्रीडोनुसंपरिभ्यश्च | २१८ |
| क्वनिप्कचिदन्येभ्योपि दृश्यते | २९२ |
| क्सुकानौ णबेवत् | २६८ |
| क्विप् | २९३ |
| क्विपो लोप० | २१६ |
| क्विप्कनिप्ङाः | २५८ |
| क्विबन्ते वह्यनसो डान्तादेशो वक्तव्यः | २५५ |
| क्षय्यजय्यौ शक्यार्थे निपात्येते | २९५ |
| क्षायो मः | २६७ |
| क्षियो निष्ठायां कर्तरि दीर्घो वाच्यः | २६४ |
| क्षीरलवणयोस्तृष्णायां यः सुट् च | २१३ |
| क्षेश्च तथा | २७५ |
| **ख** | |
| खन एत्वं क्यपि वाच्यम् | ३०० |
| खनेरात्वं निष्ठायाम् | २६७ |
| खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः | २४७ |
| खिति पदस्य | २४६ |
| ख्युट् करणे | २४८ |
| **ग** | |
| गत्यर्थादकर्मकाच्च कर्तरि क्तः | २७१ |
| गत्वरो निपात्यते शीलेऽर्थे | २७१ |
| गमः परौ सिस्यौ आत्मनेपदे वा कितौ | २१८ |
| गमां छः | ४६ |
| गमां स्वरे | ४७ |
| गमेर्डोः | २८४ |
| गमेसेः इड्वाच्यः | १९२ |
| गम्धननिद्विश्दृषां क्सोर्वेट् | २६९ |
| गम्यम्नम्हम्तनादीनां क्विपि यमस्य लोपो वाच्यः क्यपि वा | २५५ |
| गिरते रस्य वा लस्वरेवाच्यः | १५६ |
| गिले परेऽगिलस्य | २३८ |
| गुणः | ८ |
| गुणोर्त्तिसंयोगाद्योः | ९४ |
| गुप्गुहोः क्यप् | २९९ |
| गुभ्यः | ९९ |
| गुरोर्हसात् | ३०३ |
| गुहेरुपधाया ऊद्गुणहेतौ स्वरे | ७८ |
| गौणः प्रकृत्यर्थोऽन्यत्र सात् | १८८ |
| ग्रहां क्ङिति च | ८२ |
| ग्लहेः क्यप् | २९९ |
| ग्लाजिस्थाभूम्लाक्षिपच् यज्परिमृज् एभ्यः स्नुः | २७५ |

सूत्राणि० पृष्ठं
ग्लानुदिभ्यां डौः २८४
ग्लाम्ला ज्या ३०२

घ

घञ् भावे २८८
घसादेः क्मरः २७८
घाटादेशोवक्तव्यः २४९
घृघपदो मः २८२
घ्राध्मोरीः २०३

ङ

ङिति हसे भिय इकारो वा वक्तव्यः ११३
ङित्यदुः १४९
ङिदनेकाक्षरोप्यादेशस्तदन्तस्यव वक्तव्यः २१९
ङे नशेरत एत्वं वा वाच्यम् १३०
ङेवचेरुमागमो वक्व्यः ९६

च

चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ वा वक्तव्यौ १०१
चजोः कगौ धिति २७८
चरफलोरुच्चास्य २००
चरिचलिपतिहनिवदीनां वा द्वित्वं पूर्वस्यागागमश्च २३९
चायो यङि की वाच्यः २०४
चारौ वा २४९
चिनोतेः सगादौ किस्त्वं वा वाच्यम् १३७, १८७
चिस्फुरोर्जावात्वं वा १७०
च्वौ दीर्घ ई चास्य २९१
च्वौसलोपश्च २९१

छ

छः श्ने २९२
छादेरिस्मन्त्रघञ्क्विप्सुह्रस्वो वाच्यः २८९
छ्वोः शऊ वाच्यो किति ङिति झसे परेऽनुनासिके क्वौ च २५४

ज

जक्षादेरन्तोदन उस् ९८
जनखनसनां क्ङिति य आकारो वा वक्तव्यः ७७
जनिवध्योर्न वृद्धिः ८७
जनीजॄष्क्नसुरञ्जोमन्ताश्च १८३
जनेर्जा निष्ठायाम् २६७
जरादौङानु० ३०३
जल्पभिक्षकुट्टलुण्टवृङ्णुभ्यः षाकः प्रत्ययो भवति २७६
जहातेर्यादादावालोपा वाच्यः ११९
जहातेराकारस्य क्ङिति हसे ईर्वा वाच्यः ११९
जहातेश्च किति २६६
जह्येधिशाधि ८७
जागर्तेः किति गुणो वक्तव्यः ९८, २६९
जागर्तेरूको वाच्यः २७९
यगार्तेर्गुणः ३०१
जा जनीज्ञोः १३२
जानातेर्ञौ वा ह्रस्वः १८४
जानातेश्च २३८
जायापत्योष्टक् २४९
जायाया निङादेशो बहुव्रीहौ वक्तव्यो यलोपश्च जिभ्वोः स्नौ गुणाभावो न इट् २७६
जॄस्तम्भुम्रुचुम्लुचुग्लुचुग्रुग्लुञ्चुश्विभ्यश्च्लेरङ् वा १६२
ज्ञाश्रुस्मृदृशां सनन्तानामात् २२०
ज्वलग्लास्नाश्च वा मितः १८४
ज्वलादेर्णः २४२

झ

झपानां जबचपाः १७
झसात् ३२
झसाद्धिर्हेः ८४
झमस्य क्यपि ३०८

ञ

ञमजपां मुक् १९९
ञमान्तस्य क्ङिति झसे दीर्घः २५९
ञाविष्ठवत्कार्यम् २१४
ञिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् १७१
ञित्स्वरितेतश्च उभे ३
णिर्डित्करणे २१४
ञीतां तक् वर्तमानेपि २६२
ञेः ६९
ञेरयङ्द्विश्च ९६

| सूत्राणि० | पृष्ठं |
|---|---|
| ञ्यन्तानां मितामिणिणिदिटि च ना वृद्धिर्वाच्या ञिलोपश्च | २२९ |
| ञ्यन्तआसृग्रन्थ | ३०६ |
| ट्वितोऽथुः | २९१ |
| **ड** | |
| डीड इडभावः | २६४ |
| डाच् क्वचिद्वक्तव्यः | २५० |
| ड्वितस्त्रिमक् तत्कृते | २९१ |
| **ढ** | |
| ढिढो लोपो दीर्घश्च | ५० |
| **ण** | |
| णप्वुण्स्युटो हित्वान्यस्माद्दरिद्रातेरनप्यालोपो लुङि वा | ९९ |
| णबादौ पूर्वस्य | ६१ |
| णलुत्तमो वा णिद्वक्तव्यः | ३३ |
| णादिः कित् | १७ |
| णित्पे | ३३ |
| णिनिरतीते | २५७ |
| **त** | |
| तथोर्धः | ३२ |
| तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च तनादेरकरोतेस्तन्थासोर्वासिलोपो वाच्यः | १४७ |
| तनादेरुप् | १४७ |
| तनादेरुपधाया गुणो वा पिति | १४८ |
| तनेः से वा दीर्घः | १९४ |
| तनोतेर्नो वा | २२८ |
| तत्कालेक्यप् दृश्यते | ३०८ |
| तव्यानिया | २९४ |
| तस्थे | ११० |
| तिष्ठतेरुपधाया इकारो वक्तव्योऽङिपरे | १७६ |
| तुदादेरः | १५० |
| तुमर्थे वुण् वक्तव्यः | २८७ |
| तुम् तदर्थायां भविष्यति | २८७ |
| तुरुनुस्तुभ्योऽद्विरुक्तेभ्यो हसादिनां चतुर्णामिड्वा | ८९ |
| तुह्योस्तातङ्ङाशिषि वा वक्तव्यः | १३ |
| तृवुणौ | २३५ |
| तृफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वक्तव्यौ | ४८ |
| त्वरतेर्वस्य | ३०२ |
| त्यादौ भविष्यति स्यप् | २१ |
| त्राणाद्या वा | २६५ |
| **द** | |
| ददातेस्तो वाच्यः | २६६ |
| दधातेर्हिर्निष्ठायां वाच्यः | २६६ |
| दयतेर्णादौ दिग्यादेशो दित्वाभावश्च वक्तव्यः | २७३ |
| दरिद्रातेरिदालोपश्च ङिति | ९९ |
| दः सः | ९३ |
| ,, | १४२ |
| दस्तस्य नोदश्च | २६२ |
| दादीनां क्यपि | ३०८ |
| दादेः | ११९ |
| दादेः पे | ११९ |
| दादेरिः | २०३ |
| दादेरे | ५२ |
| दधास्थामित्वं सेङित्वम् | ११९ |
| दार्वाहनो अण् वक्तव्यः | २४९ |
| दां हौ | ११९ |
| दिपि सस्य तः सिपि वा | १०० |
| दिवादावट् | १५ |
| दिवादेर्यः | १२४ |
| दिस्योर्हसात् | ८६ |
| दीर्घादेव क्षियो निष्ठायास्तस्य नो वाच्यः | २६४ |
| दुषेर्यो कृति च दीर्घो वक्तव्यः | २४० |
| दुषेर्ञौ वा दीर्घो वक्तव्यः | १८३ |
| दुहदिह्लिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति | ७८,१०७ |
| दुहः के वा घो वाच्यः | २३८ |
| दुहः स्नुनमां कर्मकर्तरि यगिणौ न | २३१ |
| दृशादेः पश्यादिः | ५३ |
| दृशादेः शः | २४१ |
| दृशेष्टक्सकौ चोपमाने कार्ये | २५५ |
| दैङो णादौ दिग्यादेशो द्वित्वाभावश्च | ७३ |
| दो दत्ति | २६५ |

सूत्राणि० पृष्ठं०
द्युतेः पूर्वस्य सम्प्रसारणं वक्तव्यं णादौ परे ७३
द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम् ७३
द्युतिगमिजुहोतीनां क्विपि क्वचिद्द्वित्वं वाच्यम् २५५
द्योततेः क्वचित्पूर्वस्य क्विपि संप्रसारणं वाच्यम् २६६
द्विरुक्तस्य हिनोतेः कुत्वं वाच्यम् १३९
द्विरुक्तस्य हन्ते कुत्वं वाच्यम् २०४
" २१०
द्विरुक्तस्य हन्तेस्थपि घत्वं वाच्यम् ८७
द्विरुक्तस्य हन्तेर्हकारस्य घत्वं वक्तव्यम् २६९
द्विर्निमित्तेऽचि १४७
द्वेः ११२
" २०६
द्वेः स्वरेपि नोपधागुणः १२१

ध

धनार्तिचक्षिचक्षिङ्पूर्वपितपिजनियचिभ्य उस् प्रत्यया भवति २८६
धातोः २
धातोर्नामिनः ३७
धातोः प्रेरणे १७३
धातोरुपधाया ऋकारस्य ईकारादेशो जिप्रत्यये परे १७३
धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये १९६
धिन्विकृण्व्योर्नो लोपो वाच्यः १४०
धौ सलोपो वाच्यः १०१
ध्याख्यपृमूर्च्छिमदां क्तस्य नलाभावो वाच्यः २६६
ध्यायतेः क्विपि सम्प्रसारणं दीर्घता च वक्तव्या २६९
ध्वादेरुलिक् २८३
ध्वे च सेर्लोपः २३
" ८१

न

नक्त्वा सेट् कित् ३०१
नञ्पूर्वेभ्यः कृद्ध २४१
नट्की २९१
नमः १४४
नमस्तोऽस्य ९३
नमादेरः २७७
न रितः १८१
नव परस्मपदानि ५
नशेः पान्तस्य १३०
नहिवचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तीत्युच्चारणीयम् ९५
नहिवतिव्यधिवृषिरुसहितनिपु क्विबन्तेपु पूर्वपरस्योपसर्गस्यान्ते दीर्घो वाच्यः २५४
नाक्यादेः १६१
नातः १६१
नानप्योर्वः ७२
नानिटि से ५९
"
नामधातुष्ठ्यैष्वष्कष्ठिवां षः सो नेति वाच्यम् २९
नामिनश्चतुर्णां धो ढः १९
नाम्न आचारे क्विब् वाच्यः २१६
नाम्नि च २४३
नाम्नि च युष्मादि चास्मादि च भागः ६
नाम्नो य ई चास्य २११
नाम्यन्तात्परस्य सस्य कित्वं वाच्यम् १८७
नाम्यन्तोपसर्गस्य दीर्घो भवति २६६
नाम्युपधात्कः २३८
निजां गुणः १२१
निविशादेः २१७
निष्ठायां ह्रस्वो वाच्यः २६२
निसनिक्षनिन्दामुपसर्गाण्णत्वं वा वाच्यम् ३८
नुगशाम् ३५
नूपः १३५
नृतनृदछदचृदकृद्वयोऽसेः स्यादेरिड्वा १४३
नृतनृदछृदृकृदृकृतां सस्यामेरिड् वा वक्तव्यः १२५
नैकस्वरादनुदात्तात् ४१
नोपधात्थफा ३०७

प

पचिनन्दिग्रहादेर्युणिनि २३९

| सूत्राणि० | पृष्ठं० |
|---|---|
| पचो वः | २६७ |
| पततनदरिद्राभ्यः से वा इड् वाच्यः | १९४ |
| पतेङ्के पुमागमो वक्तव्यः | ६० |
| पतो वेट् | १९३ |
| पदस्रंसुध्वंसुभ्रंसुदशुकस्वञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नुगागमो वाच्यः | २०२ |
| पदादेस्तनि कर्तर्यपि सेरिण्वक्तव्यः दीपादिभ्यो वा | १३२ |
| पयसस्तु विभाषया | २१९ |
| परतोऽन्यत् | ४ |
| परापूर्वे यतावुपसर्गरेफस्य लत्वं वाच्यम् | ७० |
| परोक्षे | १६ |
| पाणिघताडघौ शिल्पिनि निपात्येते | २४९ |
| पातेर्ञौ लुग्वक्तव्यः | १७८ |
| पादेर्युक् | १७७ |
| पिबतेरङि पूर्वस्येकारोपधालोपौ वक्तव्यौ | १७७ |
| पिबतेरसि | २८५ |
| पुगन्तस्य गुणो वक्तव्यः | १७६ |
| पुशकात् | २१९ |
| पुष्पादेरः | २८३ |
| पूङो वा क्तः सेट् | २६१ |
| पूजायामञ्चेर्नलोपाभावो वाच्यः | ३९ |
| पूर्वस्य ङिति झसे धः | १२० |
| पूर्वस्य हसादिः शेषः | २६ |
| पूर्वकाले क्त्वा | ३०५ |
| पृच्छतेर्विण् | २४९ |
| पृथ्वादेरः | २१४ |
| पोरुर् | ११४ |
| प्यायः पी | २६४ |
| पौनः पुन्येणम् | ३०९ |
| प्रत्ययलोपे प्रत्ययलक्षणम् | ३२ |
| प्रत्ययोत्तरपदयोः परतो युष्मदस्मदोरेकत्वे प्रत्ययान्तात् | ३०४ |
| त्वतमत इत्येतावादेशौ भवतः | २९६ |
| प्रादेश्च तथा तौ सुनमाम् | ३० |
| प्रीञ्धूञोर्नुक् | १७९ |
| प्वादेर्ह्रस्व | १६२ |



| सूत्राणि० | पृष्ठं० |
|---|---|
| **फ** | |
| फणादीनामेत्वपूर्वलोपौ वा वाच्यौ | ६० |
| **ब** | |
| ब्रुवो वचिः | ११० |
| **भ** | |
| भजां विण् | २४९ |
| भञ्जेरिणि वा नलोपो वाच्यः | २२८ |
| भवादिषु इशेष्टकारादयः पूर्वस्य टे दीर्घता च वक्तव्या | २९३ |
| भविष्यदर्थे णिनिः | २८३ |
| भविष्यदर्थे तिप्तेवद् शतृशानौ भवतः | २७३ |
| भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः | २८८ |
| भावे कर्तरि चादितः क्तस्येट् वा वाच्यः | २६२ |
| भावे युट् | ३९२ |
| भासादेर्घुः | २७८ |
| भिदिछिदिविदि एभ्यः कुरङ् वाच्यः शीलेऽर्थे | २७८ |
| भिद्योध्या नदे निपात्येते | ३०० |
| भिः क्रुक्लुकौ वक्तव्यौ | २७९ |
| भियो ञौ वा षुगात्वे वाच्ये | १८५ |
| भीरुश्वोर्वा मक् | २८३ |
| भीहुभृह्रीणामाम्वा वक्तव्यः स लुग्वत् | १२१ |
| भुजस्य च मुम्वा डप्रत्ययान्ते गमौ | २४४ |
| भुजो भोजन आत्मनेपदं वाच्यम् | २२१ |
| भुवो भावे क्यप् | २९९ |
| भूते सिः | २२ |
| भृज्जतेः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः | १९१ |
| भृजां लुकि | ११७ |
| भृशादिभ्योऽभूततद्भावे यङ् वाच्यः | २१६ |
| भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वो ङपरे ञौ | १६९ |
| भ्वादिः | २ |
| **म** | |
| मदामः | २९० |
| मन्युपधाया ऋ रः | २८२ |
| मस्जिनशोर्झसे नम् वक्तव्यः | १३० |
| माङि लुङेव वक्तव्यः | २५ |

| सूत्राणि० | पृष्ठं० |
|---|---|
| मानादीनां पूर्वस्य दीर्घो वक्तव्यः | ६८ |
| मान्ताव्ययाभ्यां यो न | २१२ |
| मितां ह्रस्वः | १८२ |
| ,, | १७०, १८३ |
| मिदेर्गुणः | २६२ |
| मिदेर्ये गुणो वक्तव्यः | १३१ |
| मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि च आत्वं वाच्यम् | १६२ |
| मुगानेतः | २७० |
| मुचादेर्मुम् | १६२ |
| मूर्तौ घनः | २९० |
| मृङ्मृद् | ३०६ |
| मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्यः | २७५ |
| मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्या किति ङिति स्वरे वा | ९४ |
| मृजो वा क्यप् | २९९ |
| मेटः | २४ |
| मो नो धातोः | २०९ |

य

| सूत्राणि० | पृष्ठं० |
|---|---|
| य एते भावकार्ययोर्विहितास्तकादयस्तेऽर्हविधौ च वक्तव्याः | ३०० |
| यकारस्य सम्प्रसारणनिषेधो वाच्यः | ८२ |
| यकारपरस्य रेफस्य द्वित्वं वाच्यम् | १९९ |
| यकारस्यानपि वा लोपो वाच्यः | २११ |
| यक्चतुर्षु | २२२ |
| यङ ऊकः | २७९ |
| यङि | १९६ |
| यङि सलोपो वाच्यः | २१५ |
| यङो लुक् | २७९ |
| यजां यवराणां य्वृतः संप्रसारणं कि | ६२ |
| यज्याच्वच्रुच्प्रवच्अर्च्त्यज्पूज्गर्जभुजां घ्यणि कुत्वाभावः | २१६ |
| यज्याच्यत्विच्छप्रच्छस्वप् एभ्यो नङ्प्रत्ययो भवति | २११ |
| यतः | ४४ |
| यरलवसंयोगादेरादन्तान्निष्ठातस्य नो वाच्यः | २६४ |
| यवयोर्वसे हकारे च लोपो वक्तव्यः | १८१ |
| यः से | ८६ |
| यस्य क्वचिद्विकल्पनेड् तस्य निष्ठायां नेड् वाच्यः | २६० |
| या ई | १२ |
| यादादौ | ९५ |
| यादौ प्रत्यये ओकारौकारयोरवावौ वक्तव्यौ | २११ |
| यामियम् | १२ |
| यावत्पुरानिपातयोर्योगे भविष्यदर्थे तिवादयो लट् | २३३ |
| युवगाहिभ्यो निः | २८३ |
| युवोरनाकौ | २३७ |
| युस इट् | १२ |
| योः | १२६ |

र

| सूत्राणि० | पृष्ठं० |
|---|---|
| रञ्जेर्णौ मृगरमणेऽर्थे नलोपो वाच्यः | १८४ |
| रञ्जेर्नलोपो वा | २३७ |
| रभलमोः स्वरे णाद्यपौ विना मुम्वाच्यः | १७८ |
| ,, | २८८ |
| राजघ उपसंख्यानम् | २४९ |
| राजादेः कन् | २८५ |
| रीतो णौ पुक् | १७० |
| रात्सस्य | ९४, २०८ |
| रादिफोवा | ३०१ |
| राधतेर्हिंसायां किति णादौ सेटिथपि चैत्वपूर्वलोपौ वा | १२७ |
| रारो झसे दृशाम् | ४९ |
| राल्लोपाच्छ्वोः | २६६ |
| रीगुदुपधस्य | २०१ |
| रुदविदमुषग्रहिस्वपि प्रच्छः स किद्वाच्यः | १८९ |
| रुदादेर्दिस्योरीडटौ च वक्तव्यौ | ६९ |
| रुदादेश्चतुर्णां ह्वसादेः | ९६ |
| रुधादेर्नम् | १४१ |
| रुशब्दात् युरपि वक्तव्यः | २४० |
| रुहेर्णौ पो वा वाच्यः | १७९ |
| रोर्युण् | २४० |

ल

| सूत्राणि० | पृष्ठं० |
|---|---|
| लक्षेरी मुट् च | २९१, २८४ |

| सूत्राणि० | पृष्ठं० |
|---|---|
| लीलीङोरात्वम् वा | १६६ |
| लघोर्दीर्घः | ६९ |
| लङो ध्वस्य नेट् | १०३ |
| लषपतपदस्थाभूवृषहनृकमृगमृश्व एभ्य उकण् प्रत्ययो भवति | २७७ |
| लित्पुषादेर्ङः | ४७ |
| लिपिसिचिह्वयतीनामात्मनेपदे सेर्ङो वा वाच्यः | १९३ |
| लीयतेर्वात्वं वा | १८१ |
| लीलीङोरात्वंवा | १६६ |
| लुकि सति पिति त्स्मि वा ईकारो वक्तव्यः | २०६ |
| लुपसदचरजपजभदहदशगृभ्यो धात्वर्थगर्हायामेव यङ् | १९९ |
| लोकाच्छेषस्य | ३११ |
| लोपः | १३२ |
| ,, | २२३ |
| लोपः पचां कित्ये चास्य | ३६ |
| लोपस्त्वनुदात्ततनाम् | ८७ |
| लोपागमयोर्मध्ये आगमविधिर्बलवान् | ९४ |
| लापो ह्रस्वाज्झसे | ७३ |
| लरान्तस्याकारस्य सौ नित्यं वृद्धिर्वाच्या | ४८ |
| ल्वाद्योदितः | २६३ |
| **व** | |
| वचादेरस | २८९ |
| वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घः संप्रसारणाभावश्च वक्तव्यः | २५३ |
| वचेः शब्दसंज्ञायां कुत्वं वाच्यम् | २९६ |
| वुणसयुटौ हित्वा दरिद्रातेरनण्यालोपो लुङि वा वक्तव्यः | २३७ |
| वदेः क्यप् भावादौ | २९९ |
| वनिपि जमस्यात्वं वाच्यम् | २६३ |
| वदिव्रज्योः सौ नित्यं वृद्धिः | ४० |
| वम एत्वपूर्वलोपौ वा वाच्यौ | ६१ |
| वयो यस्य किति णादौ वो वा वक्तव्यः | ८२ |
| वरः | २७९ |
| वर्णात्कारः | ३१० |
| वर्तमानार्थाया अपि विभक्तेः स्मयोगे भूतार्थता वक्तव्या | २३३ |
| वर्तमाने | ९ |
| वलयान्तस्य वानुक् | २०१ |
| वशेर्यङि न संप्रसारणम् | २०१ |
| वसिक्षुधेरिट् | २६० |
| वहः कृतकौकृतसम्प्रसारे होढस्त्यथोर्धष्टुभि नाढिढश्च | २१९ |
| वादीपोः शतुः | २७१ |
| वादीपोः शतुरित्यत्र वाशब्दाद्विरुक्तानां दीनां च सतुर्नित्यं मुम्प्रतिषेधो वक्तव्यो नपुंसके शौ वा | २७२ |
| वान्यत्र | २०९ |
| वजेः पर इट् किद्वक्तव्यः | १६० |
| वित्तेरन्तो वा रुट् आति | २१७ |
| विदेर्वा वसुः | २७३ |
| विदो नवानां स्यादीनां णबादिर्वा | ९२ |
| विद्दरिद्राकास्काशृजागृ उष एभ्यो वाम् | ३७ |
| विधिसम्भावनयोः | ११ |
| विपूर्वस्यदधातेः | ३० |
| विपराभ्यां जेः | २१७ |
| विषत्रसगृधधृषक्षिप् एभ्यः क्नुः | २७९ |
| विहायसौ विहश्च | २४४ |
| वुण्सयुटौ हित्वा दरिद्रातेरनण्यालोपो वाच्यो लुङि वा | २६९ |
| वुः से | १८६ |
| वृङ् इत्यस्य उर्वाच्यः | १८९ |
| वृणोतेस्थपो नित्यमिट् | १३८ |
| वृतः | २६१ |
| वृतादिभ्यः स्यप्स्योर्वा पं पेऽनिट्त्वं च | ७४ |
| वृद्धिहेतौ साविटो न दीर्घः | ११४ |
| वृद्धिहेतौ साविटो न दीर्घो वाच्यः | ९८ |
| वेः | २४९ |
| वेञो णादौ संप्रसारणाभावो वाच्यः | ८२ |
| वेञो वय् णादौ वा वक्तव्यः | ८२ |
| वेटो निष्ठायां इट् न | २६७ |
| वेडिस्से दीर्घता च | १९४ |
| वैचित्त्यापह्नवयोरप्लकालेऽपिणादिर्वक्तव्यः | २३३ |
| व्मोरा | १० |
| व्यवतेर्णादौ पूर्वस्य संप्रसारणं वक्तव्यम् | ७९ |
| व्यपपरिभ्यः क्रीञः | २२० |
| व्याङपर्युपेभ्यो रमः पम् | ७९ |

| सूत्राणि० | पृष्ठां० |
|---|---|
| व्यापारभावे वक्तव्यः स च डित् | १८६ |
| व्यासादेः किः | |
| व्येञो णादौ नात्वम् | ८३ |

**श**

| | |
|---|---|
| शतृशानौ तिप्तेवत् क्रियायाम् | २७० |
| शदेः शत् | १७६ |
| शब्दादिभ्यो यङ् | २१३ |
| शब्देतु न | २१८ |
| शप् उपालम्भे | २२० |
| शमां दीर्घः | ६० |
| ,, | ३३२ |
| शमेरपि विण् वक्तव्यः | १३१–२५० |
| शस्ददूवादिगुणभूताकाराणां नैत्वपूर्वलोपौ वक्तव्यौ | ४० |
| शसात्खपोः | २८ |
| शसादेः करणे त्रक् | २८३ |
| शाच्छासाघ्राधेटो वेति वक्तव्यम् | २३ |
| शासेरिः | १०० |
| शितिचतुर्वत् | २४२ |
| शीङोऽतो रुट् | १०५ |
| शीङो यङ् किति ङिति ये वक्तव्यः | २२४ |
| शीङो यङ् क्ङिति ये वक्तव्यः | २०४, ३१० |
| शीङः सर्वत्र गुणो भवत्यपि विषये | १०५ |
| शीङ् स्विदिमिदिक्ष्विदिधृषु पूङः क्षेमार्थे | २६१ |
| शीयादेशे आत्मनेपदं वाच्यम् | ५५ |
| शीले तृन् | २७४ |
| शुचः शुद्रे | २४४ |
| शुषेः कः | २६७ |
| शृवन्द्योरारुः | २७७ |
| श्रुवः श्रृ | १४० |
| श्लिषेरालिङ्गने सक् | १२९ |
| श्लिषशीङ्स्थाआस् श्रिवसृजनरुहजीर्यतीनां सोपसर्गत्वेन सकर्मकाणामपि कर्तरि क्तो वाच्यः | २६० |
| श्वयतेर्ङे द्वित्वं वा | ६३ |
| श्वयते श्लोपे ङो वक्तव्यः | ६३ |
| श्वयतेः संप्रसारणस्य दीर्घः | २६१ |
| श्वयतेः सौ वृद्ध्यभावो वाच्यः | ६३ |
| श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम् | ६३ |

| सूत्राणि० | पृष्ठां० |
|---|---|
| स्वजतेर्णादौ वा कित्वम् | ६६ |
| श्वस्तने | २० |
| श्वेतवाहउक्थशास्पुरोडाश्अवयाजां डम् रसे पदान्ते चेति वक्तव्यम् | |

**ष**

| | |
|---|---|
| षढोः कः से | ४९ |
| षपेरशेः किति तुग्वक्तव्यः | २८५ |
| षाको कणः | २७६ |
| षिद्भिदा | ३०३ |

**स**

| | |
|---|---|
| संज्ञायां कर्तरि च | २८९ |
| सदोणादयः | २८१ |
| स धातुः | ५१ |
| संध्यक्षराणामा | १५ |
| सरतेर्गुणः | ३०१ |
| संपद्यकर्तरीति वक्तव्यम् | २५० |
| सपरोक्षयोस्तादौ म्रियतेः परस्मैपदं वाच्यम् | १९९ |
| सपरोक्षयोर्जेर्गिः | ४८ |
| संपर्युपभ्यः परस्य करोतेर्भूषणेर्थे सुट् | १४९ |
| संपर्युपेभ्यः करोतेर्भूषणेऽर्थे सुट् | २६५ |
| सप्तम्यां जनेर्डः | २५८ |
| सप्रत्ययान्तादपि एते प्रत्यया भवन्ति | ३०० |
| समवप्रोपविभ्यः स्थः | २१९ |
| समस्तृतीयायुक्ताच्च | २२० |
| समासेक्यप् | ३०७ |
| समो गमादिभ्यः | २१८ |
| समूलाकृत० | ३०९ |
| सम्पदादेःक्विप् | २०२ |
| संयोगादि ऋदन्तवृङ्वृञां सिस्योरात्मनेपदे इड् वा वाच्यः | १६७ |
| संयोगादिऋदन्तवृङ्वृञां सिस्योरात्मनेपदे इड्वा वक्तव्यः | १३७ |
| संयोगादेरादन्तस्य किति यादावेकारो वा वक्तव्यः | ९१ |
| सर्तिशास्त्यर्तिभ्यो ङो लुङि | ५४ |
| सर्वधातुभ्यस्त्रमौ | २८३ |
| ससुट् कृञोणादौ नित्यमिड्वाच्यः | १४९ |
| सस्यात्मनेपदे स्वरे टिलोपो वाच्यः | ८० |

